**च्छाम्भवं सर्ववेदेषु वेदवादिभिरुक्तम् । तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय । अथ सनत्कुमार प्रमाणमस्य त्रिधा चाललाटादाचक्षुषश्च भ्रुवोर्मध्यतः ॥ १ ॥**

---

१०.७) तु ललाटादिपञ्चस्थानेषु पञ्चत्र्यायुषाणि नियुक्तानि यथा "त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च ततः पृष्ठे चेति" । त्र्यम्बकैरिति प्रत्येकं त्र्यम्बकमन्त्रसहितैस्त्र्यायुषैः । यद्वा अबि शब्दे अम्बन्ते रवन्ते अम्बकाः शब्दाः । यथोक्तं वृषभो[1] रोरवीति त्रिभिरम्बकैः शब्दैस्त्र्यम्बकैरकारोकारमकारैः । त्रिशक्तिभिर्वक्ष्यमाणाभिस्तिर्यक् कर्णद्वयाभिमुखाग्रा ललाटे । एवमन्यत्रापि तिस्रो रेखाः प्रकुर्वीत । एतच्छाम्भवं शम्भोरिदं व्रतम् । अनेन किं द्रव्यं किं स्थानं का रेखाः के मन्त्राः काः शक्तयः किं दैवतमिति षट् प्रश्ना उद्धृताः । इदं किं सन्दिग्धं नेत्याह सर्ववेदेषु वेदवादिभिरुक्तम् । अस्मिन्नर्थे आम्नायश्च सम्प्रदायश्चास्तीत्यर्थः । एतेन शाम्भवमितिव[2]चनान्न शैवानामेवेदं व्रतं किन्तु सर्वेषामपीत्युक्तं भवति । शम्भुनोपदिष्टत्वात्तु शाम्भवमित्युक्तमिति केचित्तन्न युक्तिसहं सर्ववेदविहितस्याप्यग्निहोत्रादेरधिकारिविशेषदर्शनात् । तस्मात् "व्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत्" इति शिवभक्तिमधिकृत्याथर्वशिरस्युक्तत्वाच्च । वासुदेवोपनिषदि गोपीचन्दनोपनिषदि च वैष्णवानुद्दिश्य नारदेन वासुदेवं प्रति "भगवन्नूर्ध्वपुण्ड्रस्य विधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहि" इति पृष्टे सति "तं होवाच" इत्यादिनोर्ध्वपुण्ड्रविधानाच्च । न च समुच्चयः सम्भवत्येकतिरोधानप्रसङ्गादिति दिक् । किं फलमित्यस्योत्तरमाह तत्समाचरेदिति । किं प्रमाणमित्यस्योत्तरमाह अथ सनत्कुमारेति । हे सनत्कुमार अस्य तिलकस्य प्रमाणमुच्यते । त्रिधाच रेखा आललाटात् ऊर्ध्वमानेन आचक्षुषश्च तिर्यग्मानेन । किं चक्षुःप्रान्तपर्यन्तं नेत्याह भ्रुवोर्मध्यत

---

१. Cf. ṚV. 4. 58. 3. २. शाम्भवमित्युक्त्वा सर्ववेदेष्वितिवचनान्न FL.

यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महेश्वरो देवता। यास्य द्वितीया रेखा सा च दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनं सवनं सदाशिवो देवता। यास्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं शिवो देवतेति त्रिपुण्ड्रं भस्मना करोति। यो विद्वान् ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा समस्तमहापातकोपपातकेभ्यः पूतो भवति। तेन सर्वे देवा ध्याता भवन्ति। स सर्वैर्देवैर्ज्ञातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। स[1] सततं रुद्रजापी भवति। स सकलभोगभुग्देहं त्यक्त्वा शिवसायुज्यमेति। न स[2] पुन-

इति। प्रत्येकं भ्रुवोर्मध्यप्रदेशात् आ एकं भ्रूमध्यप्रदेशमारभ्य द्वितीयभ्रूमध्यपर्यन्तं कर्तव्यमित्यर्थः॥ १॥

प्रणववर्णत्रयसामग्र्या तिस्रो रेखा उपास्या इत्याह यास्य प्रथमेत्यादि। आत्मा विश्वः। अन्तरात्मा तैजसः। परमात्मा प्राज्ञः। शिवो देवता सर्वेश्वरो देवता। अत्र प्रथमा रेखा चक्षुःसमीपे द्वितीया ललाटमध्ये तृतीया अलकसन्निधौ भूर्लोकादिसादृश्यात्। इति एवंप्रकारेण ध्यात्वा त्रिपुण्ड्रं भस्मना सितेन करोति निष्पादयति। यो विद्वानेवमुपासनं जानाति स सर्वोऽप्याश्रमस्थो महापातकादिभ्यः पूतः शुद्धो भवति। एतदपि फलप्रश्नोत्तरमेव तेन सर्वे देवा ध्याता भवन्तीति सर्वदेवध्यानफलं प्राप्नोतीत्यर्थः। तेनेत्यादेः स्थाने स सर्वान् देवान् ध्यातो भवतीति दाक्षिणात्याः पठन्ति

1. This clause only in CFHKL. The last reads सर्वरुद्रमन्त्रजापी. 2. च ABCDG.

रावर्त्तते न स पुनरावर्त्तत इत्याह भगवान् कालाग्नि-रुद्रः । यस्त्वेतदधीते सोऽप्येवमेव भवतीत्यों सत्यमित्यु-पनिषत् ॥ २ ॥

इति कालाग्निरुद्रोपनिषत्समाप्ता ॥ ४५ ॥

---

ध्यातो ध्यातवानिति च कर्तरि क्तं व्याख्यान्ति । ज्ञातो विदितः । स्नातः कृतस्नानः । स सततं नित्यं रुद्रजापी रुद्रजपशीलतुल्यो भवति । स पुमान् सकलभोगभुक् सन्नन्ते देहं शरीरं त्यक्त्वा हित्वा शिवसायुज्यं शिवसंयुक्ततामेत्यागच्छति । न स पुनरावर्त्तते न पुनर्जन्मानुभवति । आदरार्थं द्वित्वम् । इत्याह कालाग्निरुद्रो देवः । अध्ययनफलमाह यस्त्विति । यस्त्वेतदधीत एतदुपनिषदं पठति सोऽप्येवमेव भवतीति । अध्ययनेऽप्यर्थावबोधादेवं मनसा चिन्त-नादुक्तफलमाप्नोतीत्यर्थः । "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति तदाचरणासमर्थस्य ज्ञानादपि तत्फललाभनिर्णयात् । ओं सत्यमित्युपनिषदिति ओंकारवाच्यं सत्यं ब्रह्म भवतीत्येषा उपनि-षद्रहस्यविद्या ॥ २ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां कालाग्निरुद्रदीपिका ॥

इति कालाग्निरुद्रदीपिका समाप्ता ॥ ४५ ॥

# नारायणकृतदीपिकासहिता

# वासुदेवोपनिषत् ।

ॐ । नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ श्रीभगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहीति । तं होवाच भगवान् वासुदेवो वैकुण्ठस्थानोद्भवं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं वैकुण्ठस्थानादाहृत्य द्वारकायां मया प्रतिष्ठितम् । चन्दनं कुङ्कुमादिसहितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमा-

---

वासुदेवोपनिषदि चत्वारि शकलानि हि ।
क्षुद्रग्रन्थगणे चैकोनपञ्चाशत्तमी मता ॥

कालाग्निरुद्रोपनिषदि तिर्यक्पुण्ड्रविधिरुक्तोऽत्र तूर्ध्वपुण्ड्रविधिरुच्यते ओं नमस्कृत्येति । ऊर्ध्वपुण्ड्रविधिं ऊर्ध्वश्चासौ पुण्ड्रश्च पुण्डरीकश्च तस्य विधिम् ।

"पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके ।
चित्रे कृमौ पुण्डरीके पुण्ड्राः स्युर्नीवृदन्तरे" ॥

इति विश्वः (मेदिनी च)। द्रव्येति । किं द्रव्यं को मन्त्रः किं स्थानम् । आदिशब्दात् किं प्रमाणं का देवता कति रेखाः के वर्णा इत्यादि । द्रव्यमाह वैकुण्ठेति । विष्णुचन्दनं विष्णुदेहस्थं चन्दनम् । ननु तर्ह्यन्यत्र कथं गोपीचन्दनेन विष्णुपूजनमुक्तम् । हरिचरणच्युतगङ्गाजलस्नपनवदविरोधः । प्रतिष्ठितं स्थापितम् । ननु चन्दनं चेत्कथं पीतमत आह कुङ्कुमादीति ।

ख्यातम् । मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति ॥ १ ॥

अथ गोपीचन्दनं नमस्कृत्वोद्धृत्य

गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ॥ १ ॥

इति प्रार्थ्य "न्निमं मे गङ्गे" इति जलमादाय "विष्णो-

---

"अथ कुङ्कुमम् ।

काश्मीरजन्माग्निशिखं[1] वरं बाल्हीकपीतने ।
रक्तसङ्कोचपिशुनं[2] धीरं लोहितचन्दनम्" ॥

इत्यमरः (२. ६. १२३, १२४)। ननु विष्णुचन्दनं चेत्कथं गोपीभिर्व्यपदेशोऽत आह गोपीभिरिति । चक्रतीर्थान्तःस्थितं चक्रतीर्थमन्तर्यस्य तद्वारकाख्यं क्षेत्रं तत्र स्थितम् । चक्रसमायुक्तं चक्रेण द्वारकाशिलया सहितं सदित्यर्थः । यद्वा चक्राङ्कितमित्यर्थः । प्रार्थनामन्त्रे च चक्राङ्कितेति विशेषणात् । पीतवर्णं चेदिति शेषः । गोपीचन्दनस्य विशेषलक्षणं तु गोपीचन्दनोपनिषदि द्रष्टव्यम् ॥ १ ॥

उद्धरणप्रकारमाह अथेति । प्रार्थनामन्त्रमाह गोपीचन्दनेति । इममिति ।

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया" ॥

इति (ऋक् १०. ७५. ५) मन्त्रस्य सिन्धुद्वीप ऋषिः सर्वा नद्यो देवता जगती छन्दः । जलादाने विनियोग इति प्रयोगः । मर्दनमन्त्रो विष्णोरिति (ऋक् १. १५४. १)।

"विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः" ॥

विष्णोर्नु कमिति मन्त्रस्य दीर्घतमा ऋषिर्नारायणो देवता त्रिष्टुप् छन्दः । मर्दने विनियोग इति प्रयोगः ।

---

१. शिखवर HKL. २. पिशुने धीरलोहितचन्दने HKL.

र्नु कमि" ति मर्दयेत् । "अतो देवा अवन्तु न" इत्येताभिर्ऋग्भिर्विष्णुगायत्र्या च त्रिवारमभिमन्त्र्य

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष मां पाहि शरणागतम् ॥ २ ॥

इति मां ध्यात्वा गृहस्थो ललाटादिद्वादशस्थलेष्वनामिक्याङ्गुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो वा ललाटकण्ठहृदयबाहु-

---

"अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधिसानवि" (ऋक् १. २२. १६.) ॥

"तद्विष्णोः" "तद्विप्रास" इत्यन्ते पठितमृग्द्वयम् । अतो देवेति तृचस्य काण्वो मेधातिथिर्ऋषिर्देवता विष्णुर्गायत्री छन्दः । अभिमन्त्रणे विनियोग इति प्रयोगः । विष्णुगायत्र्येति ।

"नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात्" ॥

इति विष्णुगायत्री (महानारायणोप० ३. १६)। ध्यानमाह शङ्खेति । ललाटादिद्वादशस्थलानि वक्ष्यामः । अनामिक्येति । अनामिकयेत्यर्थः । निष्कामविषयमेतत्कामनायां तु ब्रह्माण्डपुराणे विशेष उक्तः ।

"अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ।
अनामिकान्नदा नित्यं मुक्तिदा तु प्रदेशिनीति" ॥

केशवादीति ।

"ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदये न्यस्य गोविन्दं कण्ठकूपके ।
विष्णुं च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् ।
त्रिविक्रमं कर्णदेशे वामे कुक्षौ तु वामनम् ।
श्रीधरं तु सदा न्यस्य वामबाहौ नरः सदा ।

---

१. So BDL; but HK, with *Ṛigveda*, read सप्तधामभिः ।

मूलेषु विष्णुगायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेत्। यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेत्। ब्रह्मादयस्त्रयो मूर्त्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दांसि त्रयो

---

पद्मनाभं पृष्ठदेशे ककुद्दामोदरं स्मरेत्।
वासुदेवं स्मरेन्मूर्ध्नि तिलकं कारयेत्क्रमात्" ॥

इति स्थानेष्वेभिर्नामभिर्वा धारयेत्। गायत्रीमन्त्रापेक्षो[1] विकल्पः। बाहुमूले दक्षिणोत्तरे। प्रथमतृतीयाश्रमी तु पञ्चसु स्थानेषु कृष्णादिपञ्चनामभिः (शारदा० २. ४८)।

"कृष्णः सत्यः सात्वतः स्याच्छौरिः शूरो जनार्दनः"।

इति केशवादिषु पठितानि कृष्णादिपञ्चनामानि तैर्गायत्र्या वा धारयेत्।

"कृष्णाय वासुदेवाय देवकीनन्दनाय च।
नन्दगोपकुमाराय गोविन्दाय नमोनमः" ॥

इति श्लोकपठितैः पञ्चभिर्नामभिर्वा।

"पञ्चकृष्णान्नमस्कृत्य[2] न भूयस्तनयो भवेत्"।

इति द्वारकामाहात्म्योक्तपञ्चकृष्णनामभिर्वा। ते च त्रिविक्रमः शङ्खिनारायणः पिण्डतारकेशो मूलमाधवो दामोदरश्च ज्ञातव्याः। सन्न्यासिषु विशेषमाह यतिरिति। शिरसि कियत्यो रेखा ऊर्ध्वाः कर्त्तव्या अस्योत्तरं तिस्र इति वक्तुमादौ ताः किंरूपा ध्येया इत्यत आह ब्रह्मादय इति। एते त्रयो देवा मूर्त्तयो रेखाणां तद्रूपा ध्येया इत्यर्थः। एवमुत्तरेषु। त्रीणि छन्दांसीति।

"आदौ तावद्गणछन्दो मात्राछन्दस्ततः परम्।
तृतीयमक्षरछन्द इति छन्दस्त्रिधा मतम्" ॥

इत्युक्तानि। त्रयः स्वरा उदात्तानुदात्तस्वरिताः। त्रयोऽग्नयो दक्षिणाग्निगार्हपत्याहवनीयाः। ज्योतिष्मन्तो रविचन्द्राग्नयः। काला

---

१. So HKL, but BD क्षी. २. पञ्चकृष्णाय च B.

**वेदास्त्रयः स्वरास्त्रयोऽग्नयो ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रय ऊर्ध्वाः । अकारोकारमकारा एते सर्वे प्रणवमयोर्ध्वपुण्ड्रत्रयात्मकाः । तदेतदोमित्येकधा समभवत् । परमहंसो ललाटे प्रणवे-**

---

भूतभविष्यद्वर्त्तमानाः । अवस्था जाग्रत्स्वप्नसुषुप्तयः । आत्मानः क्षराक्षरौ परमात्मा च । पुण्ड्रास्त्रय ऊर्ध्वा इत्येतान्यूर्ध्वत्रिपुण्ड्ररूपाणि ज्ञातव्यानि । पुण्ड्रशब्दश्चित्रवाची किंवेत्याह अकारेति । एते सर्वेऽकारादय एव प्रणवमयो य ऊर्ध्वपुण्ड्रस्तत्त्रयात्मकाः । तदेतद्रेखात्रयं ओमिति ओङ्काररूपेण एकधा समभवत्सम्भूतम् । परमहंस इति । ललाटे सामान्यतः पुण्ड्रत्रयमुक्तं तस्यायं येतिविशेषे विकल्पः । चिन्तनविशेषे फलविशेषमाह तत्रेति । दीपप्रकाशं दीपवत्प्रकाशते दीपप्रकाशस्तम् । पश्यन् बुद्ध्यानुभवन् । अनुभूयमान आत्मा ब्रह्मैव तद्ब्रह्माहमस्मीति भावयंश्चिन्तयन् योगी योगविन्मत्सायुज्यमवाप्नोति मया वासुदेवेन सायुज्यमैक्यमवाप्नोति ॥ दीपप्रकाशमित्यनेनाकारविशेषः प्रमाणविशेषश्च सूचितः । स्मृतौ चाधिकारिविशेषेषु बहवः प्रकारा उक्तास्तद्यथा ।

"एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशत् ।<br>
वर्त्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा ।<br>
पद्मस्य मुकुलाकारं तथैव कुमुदस्य वा ।<br>
मत्स्यकूर्माकृतिं वापि शङ्खाकारमतः परम् ।<br>
दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते ।<br>
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतःपरम् ।<br>
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।<br>
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेदिति" ॥

अत्र शङ्खेति चक्रादेरप्युपलक्षणम् । परमहंसस्य ललाट एक एव ऊर्ध्वपुण्ड्रो विकल्पेन विधीयते । ज्ञानतारतम्येन वा पक्षद्वयं वारत्रयं ललाटग्रहणात् । चतुर्णामाश्रमाणां दशाङ्गुलप्रमाणादिरूपा द्व्य-

नैकमूर्ध्वपुण्ड्रं वा धारयेत्। तत्र दीपप्रकाशं स्वमात्मानं पश्यन् ब्रह्मैवाहमस्मीति भावयन् योगी मत्सायुज्यमवाप्नोति ॥ २ ॥

अथान्यो हृदयस्थोर्ध्वपुण्ड्रमध्ये वा हृदयकमलमध्ये वा स्वमात्मानं भावयेत्।

"तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता।
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ॥ १ ॥

---

ङ्गुलपर्यन्ताः सर्वे पक्षा विद्यातारतम्येन परिगृह्यन्ते। ततो द्व्यङ्गुलन्यूनं तु निषिद्धमिति गम्यते। सन्न्यासिनामप्येते पक्षा ज्ञानादितारतम्येन यतिधर्मपद्धतावुक्ताः।

"ऊर्ध्वपुण्ड्रं यथापूर्वं धारयेच्छिरआदिषु।
यौगपद्यादूर्ध्वपुण्ड्रं दीपाकारसमं भवेत्।
यौगपद्यादूर्ध्वपुण्ड्रं तद्द्व्यङ्गुलं वाथ त्र्यङ्गुलम्।
चतुरङ्गुलमारभ्य विद्वत्तातारतम्यतः।
द्वादशाङ्गुलपर्यन्तं व्याख्यातॄणामिदं भवेत्" ॥

अत्र यतीनां दशाविशेषे दीपाकारस्योक्तेर्न ब्रह्मचार्यादित्रयस्येदमिति गम्यते। क्वचिद्दीपाद्याकृतित्वे सामान्यतो वाक्यं पठन्ति तदपि व्यवस्थितविषयम्।

"लिङ्गाकृतिर्ललाटे स्याद्धृदयेऽश्वत्थपत्रवत्।
वंशाकृतिर्भवेद्बाह्वोः शेषा दीपाकृतिः स्मृता" ॥

इति वचनात् ॥ २ ॥

परमहंसतिलकस्य ध्यानस्थानेऽभिधाय त्रिदण्डिकुटीचरबहूदकानां ते आह अथान्य इति। हृदयस्थं यदूर्ध्वपुण्ड्रं तन्मध्ये वा तस्य वा हृदयकमलस्य। अणीयोर्ध्वा व्यवस्थिता अणीयसी ऊर्ध्वमुखी

नीवारशुकवत्तन्वी पीता भास्वत्यणूपमा ।
तस्याः शिखाया मध्ये[1] परमात्मा व्यवस्थितः" ॥ २ ॥
पूर्वमभ्यस्य पुण्ड्रस्थं हृत्पद्मे[2] तु ततोऽभ्यसेत् ।
क्रमादेवं स्वमात्मानं भावयेन्मां परं हरिम् ॥ ३ ॥
एकाग्रमनसा यो मां ध्यायते हरिमव्ययम्[3] ।
हृत्पङ्कजे स्वमात्मानं स मुक्तो नात्र संशयः ॥ ४ ॥
मद्रूपमव्ययं ब्रह्म मध्याद्यन्तविवर्जितम् ।
स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम्[4] ॥ ५ ॥
एको विष्णुरनेकेषु जङ्गमस्थावरेषु च ।
अनुस्यूतो वसाम्यात्मा भूतेष्वहमवस्थितः ॥ ६ ॥
तैलं तिलेषु काष्ठेषु वह्निः क्षीरे घृतं यथा ।
गन्धः पुष्पेषु भूतेषु तथात्मावस्थितोऽस्म्यहम् ॥ ७ ॥
"यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ॥ ८ ॥
देहादिरहितं सूक्ष्मं चित्प्रकाशं निरञ्जनम् ।
सर्वानुस्यूतमद्वैतं परं ब्रह्म भवाम्यहम् ॥ ९ ॥
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृदये चिन्तयेद्धरिम्[5] ।
गोपीचन्दनमालिप्य तत्र ध्यात्वाप्नुयात्परम् ॥ १० ॥

---

व्यवस्थितेति विवक्षितम् । दार्ष्टान्तिकमाह भूतेष्विति । भवामि अस्मि । तत्र भ्रुवोर्मध्ये गोपीचन्दनस्य नित्यं धारणादेकाग्रभक्तिस्तु स्यादित्यन्वयः । एतच्चोर्ध्वपुण्ड्रं गोपीचन्दनादिरूपया मृदा ब्राह्मणा-

---

1. मध्येऽहं J, मध्ये तु E. 2. हृत्पद्मेषु EG, हृत्पद्मस्थं J. 3. अद्वयं EFG. 4. वाथ यः । J. 5. चिद्रविं हरिम् । FG.

ऊर्ध्वदण्ड्यूर्ध्वरेता य ऊर्ध्वपुण्ड्र्यूर्ध्वयोगवित्[1] ।
ऊर्ध्वपदमवाप्नोति यतिरूर्ध्वचतुष्कवान् ॥ ११ ॥
इत्येतन्निश्चितं ज्ञानं[2] मद्भक्त्या सिध्यति स्वयम् ।
नित्यमेकाग्रभक्तिस्तु[3] गोपीचन्दनधारणात् ॥ १२ ॥
ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमम् ।
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते ॥ १३ ॥
यो गोपीचन्दनाभावे तुलसीमूलमृत्तिकाम् ।
मुमुक्षुर्धारयेन्नित्यमपरोक्षात्मसिद्धये ॥ १४ ॥
गोपीचन्दनलिप्ताङ्गो देहस्थानि च तस्य यः ।
अस्थीनि चक्ररूपाणि भवन्त्येव दिने दिने ॥ १५ ॥ ३ ॥
अथ रात्रावग्निहोत्रभस्मनाग्नेर्भस्मासीदं विष्णुस्त्रीणि

---

नामेव न सर्वेषामित्याह ब्राह्मणानां त्विति । सर्वेषां शैवगाणपत्यादीनाम् । अत एव ऊर्ध्वपुण्ड्रं न शूद्रादेः स्त्रीणां च । ब्राह्मणानामित्यत्रोपादेयत्वात्पुंस्त्वं विवक्षितम् । केचिन्नोर्ध्वपुण्ड्रमाचरन्ति ते प्रत्यक्षश्रुतिविरोधादुपेक्षणीयाः । यो गोपीचन्दनलिप्ताङ्गस्तस्य यान्यस्थीनि तानि चक्ररूपाणि भवन्तीत्यन्वयः ॥ ३ ॥

रात्रौ भस्मधारणं समन्त्रकमाह अथ रात्राविति ।

"अग्नेर्भस्मास्याग्नेः पुरीषमसि चितः स्थ परिचित ऊर्ध्वचितः श्रयध्वम्" (वाजसनेयिसंहिता १२. ४६ ) ।

इति गृहीत्वा ।

"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं । समूळ्हमस्य पांसुरे" ॥

(ऋक् १. २२. १७) इति मर्दयित्वा

"त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन्" (ऋक् १. २२. १८) ॥

---

1. See Notes. 2. जानन् C. 3. भक्तस्तु J.

पदेति मन्त्रैर्विष्णुगायत्र्या प्रणवेनोद्धूलनं[1] कुर्यात् । एवं विधिना गोपीचन्दनं यो धारयेद्यस्त्वेतदधीते वा स सर्वमहापातकेभ्यः पूतो भवति । पापबुद्धिस्तस्य न जायते । सर्वेषु तीर्थेषु स्नातो भवति । सर्वैर्यज्ञैर्याजी भवति । सर्वैर्देवैः पूज्यो भवति । नारायणे मय्यचला भक्तिश्चास्य वर्धते । सम्यग् ज्ञानं लब्ध्वा विष्णुसायुज्यमाप्नोति न च पुनरावर्त्तते ।

"तद्विष्णोः[2] परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम्"॥ १ ॥

---

इति गायत्र्या विष्णुगायत्र्या वा पूर्वोक्तया प्रणवेन यतिश्चेदुद्धूलनं[१] भस्मना गात्रघर्षणं कुर्यात् । फलमाह एवमिति । धारयेत्तिलकत्वेन एतद्ग्रन्थरूपेण । सर्वैर्देवैः पूज्यो भवतीति । अत्र सर्वदेवग्रहणात्सर्वदेवताभक्तब्राह्मणानां गोपीचन्दनधारणं भस्मोद्धूलनं चेति गम्यते । न च पुनरावर्त्तते नैव पुनरावर्त्तत इत्यर्थः । तदिति । सूरयस्तद्विष्णोः परमं पदं पश्यन्ति सदा नित्यं दिवि आततं चक्षुः सूर्यस्तदिव । तत्पदं विप्रासो ब्राह्मणा विपन्यवः पन्युर्व्यवहारस्तद्रहिता एकान्तशीला जागृवांसोऽध्यवसायिनः समिन्धते प्रकाशयन्ति । तत्किं यद्विष्णोर्वासुदेवस्य परमं पदम् ॥

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
वासुदेवाद्भगवतो नैवान्योऽर्थोऽस्ति तत्त्वतः ॥

चक्रादिधारणे त्वयं निर्णयः । हस्तेनालिख्य धारयेत् । सुवर्ण-

---

1. उद्वर्त्तनं J. 2. RV. i. 22. 20, 21.

---

१. यतिश्चरेत् BD.

"तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम्" ॥ २ ॥ ४ ॥

इत्यथर्ववेदे वासुदेवोपनिषत्समाप्ता ॥ ४९ ॥

---

रजतादिमुद्रासु वा न तु धातुमयानि चन्दनेनोपलिप्य देहे निदध्यान्नापि तप्तानि देहे न्यसेदिति मन्त्रैरेव प्रश्नपूर्वकमुत्तरम् ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका वासुदेवके ॥

इति वासुदेवोपनिषद्दीपिका समाप्ता ॥

# नारायणकृतदीपिकासहिता

# गोपीचन्दनोपनिषत् ।

गोपी का नाम । संरक्षणी । कुतः संरक्षणी । लोकस्य नरकान्मृत्योर्भयाच्च संरक्षणी । चन्दनं तुष्टिकारणं च । किं तुष्टिकारणम् । ब्रह्मानन्दकारणम् । य एवं विद्वाने-

वासुदेवोपनिषदि शङ्काशूकनिवर्त्तिका ।
पञ्चखण्डाधुनारभ्या गोपीचन्दनवर्णिका ॥

वासुदेवोपनिषदि ऊर्ध्वपुण्ड्रद्रव्यत्वेन वैकुण्ठस्थानोद्भवमित्यादिना वासुदेवेन विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातमित्युक्तम् । तत्र न ज्ञायते गोपीचन्दनशब्दयोः किं प्रवृत्तिनिमित्तं कश्चार्थः कश्च वासुदेवस्तस्य च गोपीभिः कः सबन्धः कुतश्च तस्योत्पत्तिः किन्निमित्तं च गोपीभिस्तस्य प्रक्षालनं कृतं किं च तस्य वैभवं किं च तद्धारणदानादिफलमिति । तदर्थं वासुदेवोपनिषच्छेपभूता गोपीचन्दनोपनिषदारभ्यते । गोपी का नामेत्यादि । अत्रापि नारदवासुदेवयोरेव वाकोवाक्यमनुसन्धेयम् । किंप्रवृत्तिनिमित्तो गोपीशब्द इति प्रश्नः । उत्तरं संरक्षणीति । गुप् संरक्षणे । गोपायतीति गोपी पचाद्यच् । "आयादय आर्द्धधातुके वा" (पा० ३. १. ३१) इत्यायभावः । जातिलक्षणो ङीष् । ह्रस्वपाठे गोपिका नाम संरक्षणीति । कुतः संरक्षणीति पुनः प्रश्नः । उत्तरानुरोधात्कस्य चेत्यपि द्रष्टव्यम् । उत्तरं लोकस्य नरकान्मृत्योर्भयाच्च संरक्षणीति । चन्दनशब्दप्रवृत्तिनिमित्तमाह चन्दनं तुष्टिका-

1. गोपिका नाम संरक्षणी Nârâyaṇa as variant, and ADGK.
2. करणं FHK.

१. करणं LM.

**तदाख्यापयेच्च एतच्च धारयेद्गोपीचन्दनमृत्तिकाया नि-रुक्त्या धारणमात्रेण च ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति ॥ १ ॥**

**गोप्यो नाम विष्णुपत्न्यः स्युस्तासां चन्दनमाह्लाद-नम् । कश्चाह्लादः । एष ब्रह्मानन्दरूपः । काश्च विष्णु-पत्न्यो गोप्यो नाम । या आत्मना ब्रह्मानन्दैकरूपं कृ-**

रणं चेति । तुष्टिराह्लादः । चदि आह्लादे । "करणाधिकरणयोश्च" इति ल्युट् (पा० ३. ३. ११७) । चशब्द उक्तसमुच्चये । किमप-त्यजायादिवद्वैषयिकाह्लादकारणं नेत्याह ब्रह्मानन्दकारणमिति । ब्रह्मरूपोऽयमानन्दस्तदाविर्भावहेतुरित्यर्थः । एतदर्थोपदेशे ग्रहणे च फलमाह य एवं विद्वानेतदाख्यापयेदिति । एवं निर्वचनं विद्वानेत-न्निर्वचनमाख्यापयेच्छिष्यमुखेनोच्चारयेच्छिष्यं ग्राहयेदिति यावत् । य एतच्च धारयेन्निर्वचनं गृह्णीयाच्छिष्यः स उभयोरपि गोपीचन्द-नमृत्तिकयोर्निरुक्त्या निर्वचनेनोपदिष्टेन गृहीतेन च ब्रह्मलोके मही-यते महिमानमनुभवति । तथा च श्रुतिः ।

> "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके
> कामधुग्भवति"

इति शब्दमात्रेपि स्वर्गः फलम् । विशिष्टार्थवाचिनि तु वि-शिष्टं स्वर्गः फलम् । द्विरुक्तिः खण्डसमाप्त्यर्था ॥ १ ॥

गोपीशब्दार्थमाह गोप्यो नाम विष्णुपत्न्यः स्युरिति । अनेन स-म्बन्धोऽप्युक्तः । चन्दनशब्दार्थमाह तासां चन्दनमाह्लादनमिति । अनेन गोपीनां चन्दनमिति विग्रहो दर्शितः । गोपीनामाह्लादजन-कमेव धृतं तु विष्णुना न तु ताभिरिति ज्ञेयम् । विषयानन्दशङ्कया प्रश्न कश्चाह्लाद इति । उत्तरमेष ब्रह्मानन्दरूप इति । स्वरूपविषयः

1. निर्धारण° most MSS. 2. या आत्मना...अजयंस्ताः not in FGH.

१. करणं BLM. २. See Notes.

ष्णाख्यं परं धामाजयंस्ता जगत्सृष्टिस्थित्यन्तकारिण्यः प्रकृतिमहदहमाद्या[1] महामायाः। कश्च विष्णुः। परं ब्रह्मैव विष्णुः। कश्चाह्लादः। गोपीचन्दनसंसक्तमानुषाणां पापसंहरणाच्छुद्धान्तःकरणानां ब्रह्मज्ञानप्राप्तिश्च। य एवं वेदेत्युपनिषत्॥ २॥

प्रश्नः काश्च विष्णुपत्न्यो गोप्यो नामेति। या आत्मना ब्रह्मानन्दैकरूपं कृष्णाख्यं परं धामाजयंस्ताः किंसत्त्वा[१] (!) इत्यर्थः। कार्यकारणरूपविष्णुशक्तित्वेन परिहरति प्रकृतिमहदहमाद्या महामाया इति। अहमहङ्कारः। आद्यपदात्तन्मात्रादीनि। स्वशक्त्या स्वस्याभिभवो[२] न विरुद्ध इति भावः। गोपीचन्दनशब्दार्थं निर्णीय वासुदेवशब्दार्थं पृच्छति कश्च विष्णुरिति। सामान्यस्य महामायाधिष्ठातृत्वासम्भवात्प्रश्नः। उत्तरं परं ब्रह्मैवेति। ब्रह्माह्लादस्य नित्यत्वे न[३] कृत्यसाध्यत्वात्पृच्छति कश्चाह्लाद इति। नित्याह्लादस्य ब्रह्माकारान्तःकरणवृत्तिव्याप्यत्वं कृतिसाध्यमेवेति परिहरति गोपीचन्दनसंसक्तमानुषाणां पापसंहरणाच्छुद्धान्तःकरणानां ब्रह्मज्ञानप्राप्तिश्चेति। गोपीचन्दनसंसक्तिः पापसंहरणे हेतुः पापसंहरणमन्तःकरणशुद्धौ। य एवं वेद तस्यापि ब्रह्मज्ञानप्राप्तिश्चेति सन्निधानादन्वेति। इत्युपनिषद्रहस्यज्ञानमुक्तम्। अयमत्र सिद्धार्थः। गोप्यो मायाः। चन्दनं परं ब्रह्म आह्लादकत्वात्। आनन्दैकरूपतेजोमयामृतमयपरमार्थावधिभूतो विष्णुः श्रीकृष्ण एवेति। तथा च श्रुतिः (ऋ. १. १५६. ३)

"ऋतस्य गर्भं जनुषा पिपर्तनेति"

अस्या अर्थः। ऋतस्य कैवल्यस्य गर्भमिव घनीभूतं हस्तपादाद्यवयवैराविर्भूतं जनुषा देवक्यां जन्मना पिपर्तन पालयत तमेव पर-

1 अहं in K. and Dîpikâ only.

१. So B; का किंसतत्वा L; काः किंसंतत्वा (!) M. २. So ELM स्वस्वामिभावः B. ३. L omits न; नित्यत्वेनैकत्वसाध्यत्वात् B.

**गोपीत्यग्र उच्यतां चन्दनं तु ततः पश्चात्। गोपीत्यक्षरद्वयं चन्दनं तु त्रियक्षरं[1] तस्मादक्षरपञ्चकम्। य एवं विद्वान् गोपीचन्दनं धारयेदक्षयं पदमाप्नोति पञ्चत्वं न स पश्यति ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति ॥ ३॥**

**अथ मायाशबलितं ब्रह्मासीत्ततश्च महदाद्या ब्रह्मणो**

---

ब्रह्माख्यं कृष्णं जानीतेति । तथा च गोपीकृष्णसम्भोगसंसक्तकाश्मीरचन्दनक्षालनोदकसम्भूतत्वात्परब्रह्मैकरूपा गोपीचन्दनमृत्तिकेति ॥ २ ॥

फलवतीमक्षरसंख्योपास्तिं तृतीयखण्डेनाह गोपीत्यग्र उच्यतामिति । आदावुच्चरेदित्यर्थः । चन्दनं तु ततः पश्चादिति । उच्यतामित्येव । गोपीत्यक्षरद्वयमिति । अक्षरद्वयं स्वरद्वयं व्यञ्जनं तु पलालभारायमाणमविवक्षितम् । चन्दनं तु त्रियक्षरमिति । "इयादिपूरणः" (छन्दःसूत्रं ३. २)। चन्दनशब्दस्त्र्यक्षर इत्यर्थः । फलितमाह तस्मादक्षरपञ्चकमिति । य एवं विद्वान् गोपीचन्दनं धारयेदिति सार्थकं पञ्चाक्षरं नाम स्मरंस्तिलकं कुर्यान्न तु मृद्विशेषोऽयमिति बुद्ध्या । तस्य फलमक्षयं पदमाप्नोतीति । किं तेनैव देहेन । न हि । तर्हि देहत्यागदुःखमनिवृत्तमेवेत्याशंक्याह पञ्चत्वं स न पश्यतीति मरणदुःखं नानुभवतीत्यर्थः । किञ्च मरणमपि सकृदेवेत्याह ततोऽमृतत्वमश्नुत इति ।

"तस्य तावदेव चिरं यावन्न विमोक्षे[१]ऽथ सम्पत्स्ये"

इति श्रुतेः (छा० ६. १४. २)। द्विरुक्तिः खण्डसमाप्त्यर्था ॥ ३ ॥

तस्योत्पत्तिं विष्णवङ्गक्षालने[२]निमित्तं तद्वैभवं दानधारणादितः फलं च वक्तुं चतुर्थ आरभ्यतेऽथ मायाशबलितं ब्रह्मासीदिति । अथशब्दः प्राथम्ये । मायया शबलितं मिश्रितमीक्षादशापन्नम् । ततश्च

---

1. त्र्यक्षरं FK.

---

१. So MSS, but विमोक्ष्ये in *Chhândogya*. २. ने LM.

**महामायासम्मिलितात् । पञ्चभूतेषु गन्धवतीयं पृथिव्यासीत् । पृथिव्याश्च वैभवाद्वर्णभेदाः । पीतवर्णा मृदो जायन्ते लोकानुग्रहार्थम्[1] । मायासहितब्रह्मसम्भोगवशादस्य चन्दनस्य वैभवम् । य एवं विद्वान्यतिहस्ते दद्यादनुपप्लवः सर्वमायुरेति । ततः प्राजापत्यं रायस्पोषं**

---

महदाद्या ब्रह्मणो महामायासम्मिलितादिति । ततस्तस्मान्महामायासम्मिलितादद्वयब्रह्मणः सकाशान्महदाद्या आविर्भूता इति शेषः । महदव्याकृतं "मम योनिर्महद्ब्रह्म" (गीता १४. ३ )इत्यादिनोक्तम् । ततोऽहङ्कारः । स च त्रिविधः सात्त्विकस्तैजसो भूतादिश्च । सात्त्विकाद्देवा मनश्च । तैजसादिन्द्रियाणि । भूतादेः पञ्चभूतानि । तत्र गोपीचन्दनोत्पत्तिं वक्तुं प्रकृतोपयोग्याह पञ्चभूतेषु गन्धवतीयं पृथिव्यासीदिति । पञ्चभूतेषूत्पन्नेषु मध्ये इयं पृथिवी गन्धवत्यासीदित्यन्वयः । पीतवर्णं वक्तुं वर्णोत्पत्तिमाह पृथिव्याश्च वैभवाद्वर्णभेदा इति । वैभवात्सामर्थ्यात् । वर्णभेदाः सितलोहितनीलपीतहरितकपिलचित्राख्या जायन्त इत्यर्थः । किमेवं सति फलितमित्यत आह पीतवर्णा मृदो जायन्ते लोकानुग्रहार्थमिति । पीतवर्णा मृदो गोपीचन्दनाख्या लोकाननुग्रहीतुं जायन्त इत्यर्थः । वर्णभेदा अवान्तरतारतम्यभेदवत्य इति मृदां विशेषणं वा । नन्वन्या अपि पीता भूयस्यो मृदः सन्ति गोपीचन्दने तु को विशेष इत्याशङ्क्य तस्य वैभवहेतुमाह मायासहितब्रह्मसम्भोगवशादस्य चन्दनस्य वैभवमिति । गोपीकृष्णसम्भोगसंसक्तकाश्मीरक्षालनोदकसम्भूतत्वात्परब्रह्मैकरूपा गोपीचन्दनमृद इति सार्वजनीना प्रसिद्धिरिति तस्य वैभवम् । तस्य दाने फलमाह य एवं विद्वान् यतिहस्ते दद्यादनुपप्लवः सर्वमायुरेतीति । यतिग्रहणं तस्य विशेषतोऽधिकारसूचनार्थम् । अनुपप्लवो

---

1. CD. add संसारसिद्ध्यर्थं च and so G. omitting सं.

गौष्पत्यं[1] च । य एतद्रहस्यं सायम्प्रातर्ध्यायेदहोरात्रकृतं पापं नाशयति मृतो मोक्षमश्नुते मृतो मोक्षमश्नुत इति ॥ ४ ॥

गोपीचन्दनपङ्केन ललाटं यस्तु लेपयेत् ।
एकदण्डी त्रिदण्डी वा स वै मोक्षं समश्नुते ॥ १ ॥
गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं पूतं विजानीयाद्राजभिः सत्कृतो भवेत् ॥ २ ॥
ब्रह्महन्ता कृतघ्नश्च गोघ्नश्च गुरुतल्पगः ।
तेषां पापानि नश्यन्ति गोपीचन्दनधारणात् ॥ ३ ॥
गोपीचन्दनलिप्ताङ्गो म्रियते यत्रकुत्रचित् ।
अभिव्याप्यायतो भूत्वा देवेन्द्रपदमश्नुते ॥ ४ ॥

---

ऽपमृत्युरहितः[१] । फलान्तरं ततः प्राजापत्यं रायस्पोषं गौष्पत्यं चेति । ततो जीवितसिद्ध्यनन्तरं पुत्रधनपश्वादिसिद्धिं च विन्दतीत्यन्वयः । एतदर्थचिन्तनेऽपि फलमाह य एतद्रहस्यं सायम्प्रातर्ध्यायेदहोरात्रकृतं पापं नाशयतीति । पारलौकिकमाह मृतो मोक्षमश्नुत इति । द्विरुक्तिः खण्डसमाप्त्यर्था । इतिशब्दस्तद्द्योतकः ॥ ४ ॥

इत ऊर्ध्वं सार्द्धाष्टादशश्लोका गोपीचन्दनमाहात्म्यपराः । ततो गोपीनामुपनिषत्त्वस्याख्यायिका तल्लेशतो व्याक्रियते । गोपीचन्दनेति । लेपयेदिति वचनात्सम्पूर्णेऽपि ललाटे तिलकं भवतीति गम्यते ॥ १ ॥ तं तं पूतं वैष्णवदृष्ट्यैव[२] पूतं स च साधुविलोकितो राजभिः क्षत्रियैः सत्कृतः पूजितो भवेत् ॥ २ ॥ प्रायश्चित्तरूपतामाह ब्रह्महन्तेति । "जनिकर्त्तुरि"ति निर्देशात् "कर्त्तरि च" इति षष्ठीसमासनिषेधोऽनित्यः (पा० १, ४. ३०; २. २. १६) ॥ ३ ॥ आयतो दीर्घो

---

1. गौपत्यं K.

---

१. MSS. read ल्पमृत्युरहितः but see Notes on *Nârâyaṇa Upaniṣad.* २. वैष्णवं दृष्ट्वैव BJL.

गोपीचन्दनलिप्ताङ्गं पुरुषं य उपासते।
एवं ब्रह्मादयो देवास्तन्मुखास्तानुपासते[1] ॥ ५ ॥
गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते।
विष्णुपूजितभूतित्वाद्विष्णुलोके महीयते ॥ ६ ॥
सदाचारः शुभाकल्पो मिताहारो जितेन्द्रियः।
गोपीचन्दनलिप्ताङ्गः साक्षाद्विष्णुमयो भवेत् ॥ ७ ॥
गोपीचन्दनलिप्ताङ्गो व्रतं यस्तु समाचरेत्।
ततः कोटिगुणं पुण्यमित्येवं मुनिरब्रवीत् ॥ ८ ॥
गोपीचन्दनलिप्ताङ्गैर्जपदानादि यत्कृतम्।
न्यूनं सम्पूर्णतां याति विधानेन विशेषतः ॥ ९ ॥
गोपीचन्दनमायुष्यं बलारोग्यविवर्द्धनम्।
कामदं मोक्षदं चैव इत्येवं मुनयोऽब्रुवन् ॥ १० ॥
अग्निष्टोमसहस्राणि वाजपेयशतानि च।
तेषां पुण्यमवाप्नोति गोपीचन्दनधारणात् ॥ ११ ॥

भूत्वा अभिव्याप्य सर्वतीर्थान्यवगाह्य ॥ ४ ॥ एवं तदुपासनापाटवानुसारेण ॥ ५ ॥ विष्णुपूजितभूतित्वात्। विष्णोः पूजिता भूतिर्येन तत्त्वाद्वैष्णवा हि विष्णोर्भूतिः। तदुक्तं "तस्य नाहं[1] प्रणश्यामि स च मे न प्रणश्यतीति" (गीता ६. ३०) ॥ ६ ॥ शुभाकल्पः सुवेषः ॥ ७ ॥ व्रतं कृच्छ्रचान्द्रायणादि। तत उक्तफलात्। मुनिर्[2]वासुदेवः ॥ ८ ॥ न्यूनमविधिकृतं चेत्सम्पूर्णं स्यात्। विधानेन कृतं चेद्भवति तर्हि विशेषतः फलदं स्यादित्यर्थः। अङ्गभूयस्त्वे फलभूयस्त्वमिति हि न्यायः ॥ ९ ॥ मुनयो नारदाद्याः ॥ १० ॥ अश्वमेधकृतोऽश्वमेधं कृतवतो गोपीचन्दनदानस्य फलं न स्यात्किन्तु ततो

1. देवाः सन्मुखाः all MSS. of text except J.

१. *Gītā* reads तस्याहं न; तस्मान्नाहं ELM. २. मनुः M.

गोपीचन्दनदानस्य नाश्वमेधकृतः फलम् ।
न गङ्गया समं तीर्थं न शुद्धिर्गोपीचन्दनात् ॥ १२ ॥
बहुनात्र किमुक्तेन गोपीचन्दनमण्डनम् ।
न तत्तुल्यं भवेल्लोके नात्र कार्या विचारणा ॥ १३ ॥
चन्दनं चापि गोपीनां केलिकुङ्कुमसम्भवम् ।
मण्डनात्पावनं नृणां भुक्तिमुक्तिफलप्रदम् ॥ १४ ॥
कृष्णगोपीरतोद्भूतं पापघ्नं गोपीचन्दनम् ।
तत्प्रसादात्सर्वदैव चतुर्वर्गफलप्रदम् ।
तिलमात्रप्रदानेन काञ्चनाद्रिसमं फलम् ॥ १५ ॥
कुङ्कुमं कृष्णगोपीनां जलक्रीडासु सम्भृतम् ।
गोपीचन्दनमित्युक्तं द्वारवत्यां सुरेश्वरैः ॥ १६ ॥
कृष्णगोपीजलक्रीडाकुङ्कुमं चन्दनैर्युतम् ।
तिलमात्रं प्रदायेदं पुनात्यादशमं कुलम् ॥ १७ ॥
गोपीचन्दनखण्डं तु चक्राकारं सुलक्षणम् ।
विष्णुरूपमिदं पुण्यं पावनं पीतवर्णकम् ॥ १८ ॥

न्यूनं स्यात् ॥ १२ ॥ गोपीचन्दनमण्डनं यदिति शेषः ॥ १३ ॥ गोपी[1]चन्दनमण्डनात्तिलकबुद्धिं विना अलङ्कारार्थं धारणादपि नृणां पावनमित्यन्वयः ॥ १४ ॥ तत्प्रसादात् कृष्णगोप्योः प्रसादात् । सर्वदैव चतुर्ष्वपि युगेषु न केवलं कलावेव ॥ १५ ॥ सम्भृतं क्षालनेनार्जितम् । द्वारवत्यां गोपीसरसि । सुरेश्वरैर्ब्रह्मादिभिः । चन्दनैर्युतं मिश्रितं कृष्णस्य गोपीनां च जलक्रीडासु क्षालितं कुङ्कुमं गोपीचन्दनमित्युक्तमिति लक्षणमुक्तम् ॥ १६ ॥ १७ ॥ चक्राकारं पीतवर्णकं चेत्तर्हि सुलक्षणमित्यन्वयः । कुतः सुलक्षणं यत इदं विष्णुरूपं चक्राङ्कितत्वाच्चक्रतीर्थशिलावदत एव स्वयं पुण्यं पवित्रमन्येषां च पावनं पवित्रीकरणम् ॥ १८ ॥

---

१. गोपीनां चन्दनं JL.

आपो वा अग्र आसन् । तत्र प्रजापतिर्वायुर्भूत्वा-
श्राम्यतेदं सृजेयमिति । स तपोऽतप्यत तत ओङ्कारम-
पश्यत् । ततो व्याहृतीस्ततो गायत्रीम् । गायत्र्या वेदा-
स्तैरिदमसृजत । धूममार्गविस्तृतं[1] हि वेदार्थमभिसन्धाय[2]
चतुर्दश लोकानसृजत । तत उपनिषदः श्रुतय आवि-
र्बभूवुः । अर्चिमार्गविस्तृतं[3] वेदार्थमभिसन्धाय[4] सर्वान्
वेदान् सरहस्योपनिषदङ्गान् ब्रह्मलोके स्थापयामास ।
ताश्चोपादिशद्वैवस्वतेऽन्तरे सगुणं ब्रह्म चिद्घनानन्दैकरूपं
पुरुषोत्तमरूपेण मथुरायां वसुदेवसद्मन्याविर्भविष्यति ।

---

ननु गोप्यो माया इत्युक्तं मायात्वं च स्त्रीमात्रसाधारणं कृष्णव-
ल्लभत्वे न प्रयोजकम् । अथ गोप्यो नाम विष्णुपत्न्य इति पत्नीत्वा-
द्वल्लभत्वं तदपि न पत्नीनामपि नरकासुरगृहादानीतानां त्यक्तत्वात्त-
स्मात्कृष्णगोपीसंयोगजस्यैव चन्दनस्य त्रैलोक्यपावनत्वम् । गोप्य
एव च कृष्णस्य वल्लभास्तथा नान्याः स्त्रिय इत्यत्र हेतुर्वक्तव्य इत्या-
शंक्य हेतुं वक्तुमितिहासमाह आपो वा अग्र आसन्निति । वायुर्भूत्वा
वायुरूपो भूत्वा अश्राम्यत यत्नेन शोषितवान् । शोषणे प्रयोजनं इदं
सृजेयमिति । इदं जगत्सावकाशायां भूमौ सृजामीत्युद्दिश्यापः शो-
षितवान् । स इति । सृष्टिसामर्थ्याय तपोऽर्जितवान् । तपोबलेनो-
ङ्कारादिकं कर्मवेदराशिमपश्यत् । तैर्वेदैरिदमसृजत । वेदोक्तक्रमेण
चतुर्दशलोकान् स्वर्गनरकादिव्यवहारसिद्धयेऽसृजत । तत इति ।
कर्मणा शुद्धात्मनामेवोपनिषत्स्वधिकारात्ताः पश्चादाविर्बभूवुः । अ-
र्चिर्धूममार्गौ तु

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥

---

1. आविष्कृतं CG; विसृतं K. 2. अभिधाय FH. 3. विसृतं FGH.
4. अभिधारयन् AJ.

तत्र भवत्य:[1] सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभोगा गोपिकास्वरूपैः परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ[2] । तत्र श्लोकाः ।

इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मलोकगाः ।
कृष्णमाराधयामासुर्गोकुले धर्मसङ्कुले ॥ १ ॥
श्रीकृष्णाख्यं परं ब्रह्म गोपिकाः श्रुतयोऽभवन् ।
एतत्सम्भोगसम्भूतं[3] चन्दनं गोपीचन्दनं
चन्दनं गोपीचन्दनमिति ॥ २ ॥ ५ ॥

इत्यथर्ववेदे गोपीचन्दनोपनिषत्समाप्ता ॥

---

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं तेजो योगी प्राप्य निवर्त्तते" ॥

इति गीतासूक्तौ (८. २४, २५.) । रहस्यान्युपासना उपनिषदो ज्ञानप्रधानग्रन्थाः । अङ्गानि व्याकरणादीनि व्याख्यानोपायाः । ननु न वयं प्रतिबन्धेन ब्रह्मलोके स्थास्याम इति वदन्तीस्ताश्चोपादिशादुपदिष्टवान् वरेण छन्दयामास । वरमाह वैवस्वतेऽन्तर इति । तत्र भवत्यस्ता भवत्यः । सर्वलोकोत्कृष्टं सौन्दर्यं यस्य तादृशः क्रीडाभोगो देहसंस्थानविशेषो यासां ताः । भजिष्यथेति[१] । भक्तिरेवानुग्रहे परमं कारणमिति भावः । श्रुतयो गोपिका अभवन्नित्यन्वयः । पुनरुक्तिः सेतिशब्दा ग्रन्थसमाप्त्यर्था ॥ ५ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां दीपिका गोपीचन्दने ॥

इति गोपीचन्दनोपनिषद्दीपिका समाप्ता ॥

---

1. भगवत्यः FH. 2. भविष्यथ CDEG. 3. एतत्संयोग° AJ.

---

१. भविष्यथेति BE.

## नारायणकृतदीपिकासहिता

# नारायणोपनिषत् ।

ॐ । अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति । नारायणात्प्राणो[1] जायते मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणात्प्रजापतिर्जायते नारायणादिन्द्रो जायते नारायणादष्टौ वसवो नारायणादेकादश रुद्रा नारायणाद्द्वादशादित्याः सर्वा देवताः सर्वे ऋषयः सर्वाणि छन्दांसि सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते नारायणे प्रलीयन्ते ॥ १ ॥

अथ नित्यो देव एको नारायणो ब्रह्मा च नारायणः शिवश्च नारायणः शक्रश्च नारायणो द्वादशादित्याश्च नारायणो वसवोऽश्विनौ च नारायणः सर्वे ऋषयोऽपि

---

नारायणस्योपनिषत्त्रयस्त्रिंशत्तमीमता ।
आथर्वणशिरःपूर्वं खण्डपञ्चकमण्डिता ॥

आदिनारायणस्योपास्यतमत्वप्रतिपत्तये महिमानमाह ॐ । अथेति । नारायणात्प्राण इति । क्वचित्तु क्रमान्तरं वर्त्ततेऽयमेव तु मुख्यः क्रमः । विश्वस्य धारिणी जगद्धात्री । प्रजापतिर्हिरण्यगर्भः । नारायणे प्रलीयन्ते द्विरुक्तिः खण्डसमाप्त्यर्था ॥ १ ॥

ब्रह्मा च नारायण इति । "पिता वै जायते पुत्र" इति श्रुतेः

---

1. नारायणात्प्राणः...धारिणी । not in ADII.

नारायणः कालश्च नारायणो दिशश्च नारायणोऽधश्च नारायण ऊर्ध्वं च नारायणो मूर्तामूर्तं च नारायणोऽन्तर्बहिश्च नारायणो नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम् । अथ नित्यो निष्कलङ्को[1] निराख्यातो निर्विकल्पो निरञ्जनः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् । य एवं वेद स[2] विष्णुरेव भवति । रुद्रं स सारथिं कृत्वा मनःप्रग्रहवान्पुमान् । प्रयाति परमं पारं विष्णवाख्यं पदमव्ययं विष्णवाख्यं पदमव्ययम् ॥ २ ॥

एतद्वै नारायणस्योपनिषदम् । यो ह वै नारायणस्योपनिषदमधीते स सर्वेभ्यो अघेभ्यो विमुक्तो भवति स सर्वेभ्यो [3]घोरेभ्यो विमुक्तो भवति स सर्वान् कामानवाप्नोति सर्वांश्च लोकानाप्नोति ब्रह्मत्वं च गत्वामृतत्वं

---

सर्वात्मकत्वाच्च भगवतो नारायणस्य । निष्कलङ्को निर्लेपः । निराख्यातो निष्क्रियः शब्दागम्यो वा । रुद्रं स इति । स पुमान् य एवं वेद स पुरुषो रुद्रं महादेवं सारथिं जगद्गुरुत्वान्मार्गप्रदर्शकं कृत्वा । अध्यात्मं विज्ञानशक्तिं बुद्धिं सारथिं कृत्वेत्यर्थः । "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि"ति काठकश्रुतेः ( ३. ९ ) । रथ्यादिकल्पनापि तत्रैवोक्ता ( ३. ३, ४ ) । "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरानि"ति । मन एव प्रग्रहो रश्मिस्तद्वान् स संसारान्तं याति । खण्डान्तत्वाद्विरुक्तिः ॥ २ ॥

ब्रह्मत्वं ब्राह्मणजातिं यद्वा परमात्मैक्यं ब्रह्मभूयं प्राप्यामृतत्वं

---

1. निष्कलः ADH. 2. स विष्णुरेव भवति not in ADHK; but EFJ repeat it. 3. अघोरेभ्यः BC.

च गच्छत्यमृतत्वं च गच्छतीति ॥ ३ ॥

ओमित्येतदग्रे व्याहरेन्नम इति पश्चान्नारायणायेत्युपरिष्टात्। ओमित्येकाक्षरं नम इति द्वे अक्षरे नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदम्। यो ह वै नारायणस्याष्टाक्षरं पदमध्येत्यनुपप्लवः[1] सर्वमायुरप्येति विन्दते प्राजापत्यं रायस्पोषं गौष्पत्यं स ततोऽमृतत्वमश्नुते स ततोऽमृतत्वमश्नुत इति ॥ ४ ॥

[2]प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपमकार उकारो मकार इति तानेकधा समभवत्तदेतदोमिति [3]यं दृष्ट्वा

मोक्षं गच्छति ॥ ३ ॥

अष्टाक्षरमादिमन्त्रमुद्धरति ओमित्येतदग्र इति। व्याहरेदुच्चरेत्। पदं मन्त्रम्। अध्येति नित्यं स्मरति पदव्यत्ययेनाधीत इति वार्थः। अनुपप्लवोऽ[१]पमृत्युरहितः। सर्वमायुः साग्रं शतम्। रायस्पोषं "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" (पा० ८. ३. ५३) इति विसर्गस्य सकारोऽत एव षष्ठ्या अलुक्। एवं गौष्पत्ये। गोःपतेर्भावो गौष्पत्यं "पत्यन्तपुरोहितादिभ्यो यक्" (पा० ५. १. १२८)। गौपत्यमित्यपि पाठो दृश्यते ॥ ४ ॥

प्रत्यगानन्दं ब्रह्मेत्ययं खण्डः कैश्चिन्न पठ्यते स तु प्रमाद एव आत्मबोधोपनिषद्यस्य "शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्न सीदती"-त्यध्याहारेण व्याख्यातत्वात्। अष्टाक्षरे प्रथमाक्षरं विविनक्ति प्रत्यगानन्दमिति। तान् वर्णानेकधा एकरूपेण समभवज्जनकान् चकार सन्धिं कृत्वा ऐक्यं चक्रे। तदोमिति सम्पन्नम्। यं प्रत्यगानन्दं ब्रह्म

1. अनपप्लुवः H. 2. This section not in AHK. It is added in the margin of D. 3. यमुक्त्वा BC, and Dîpikâ as variant.

१. MSS. read त्यपमृत्युरहितः without *avagraha*. See Notes.

**मुच्यते योगी जन्मसंसारबन्धनात् । ओं नमो नारायणायेति मन्त्रोपासको वैकुण्ठभुवनं गमिष्यति । तदिदं पुरं पुण्डरीकं विज्ञानघनं तस्मात्तडिदाभमात्रम्[1] ।**

पुरुषं दृष्ट्वा साक्षात्कृत्य । यमुक्त्वेति पाठे प्रणवमुच्चार्य । वैकुण्ठभुवनमिति "विकुण्ठायां तु वैकुण्ठः सञ्जातश्चाक्षुषेऽन्तरे" तस्य भुवनं तेन वासितं नगरम् । तदेवाह तदिदं पुरं पुण्डरीकं कमलाकारं वर्त्तुलं विज्ञानघनं ज्ञानक्षेत्रं तत्र हि ज्ञानिनो वसन्ति ब्रह्माविर्भावश्च भवति "छायातपयोरिव ब्रह्मलोक" इति **काठक**श्रुतेः (६. ५)। **भास्करा**दयस्तु विज्ञानपरिणामवादिनः पुञ्जीभूतं विज्ञानमानन्दरूपं ब्रह्म वैकुण्ठ इत्याहुः । तन्मते घनशब्दो मुख्यवृत्तिः "मूर्त्तौ घन" इति स्मृतेः (पा० ३. ३. ७७)। ब्रह्मणो विकारित्वानित्यत्वप्रसङ्गस्तु[2] दोषः । तस्मादष्टाक्षरोपासनाद्गमिष्यतीत्यन्वयः । तडिदाभमात्रं विद्युत्प्रभामात्रं तेजोमयं भास्वत्प्रभमादित्यमण्डलवद्बाह्याभ्यन्तरतेजोदीप्तम् । तदेवाष्टाक्षराङ्गं तस्य च पीठपूजा **नृसिंहावसरे** उक्ता (नृसिंहपूर्वतापनीदीपिका ५. २) । भूतशुद्धिप्राणप्रतिष्ठे **रामपूर्वतापनीये** (८५) वक्ष्येते । अस्य ऋष्यादिर्यथा ।

"तारं नमः पदं ब्रूयान्नरौ दीर्घसमन्वितौ ।
पवनो णायमन्त्रोऽयं प्रोक्तो वस्वक्षरान्वितः ॥
साध्यनारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।
मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ॥
क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
वीरोल्काय शिखा प्रोक्ता द्यूल्काय कवचं मतम् ॥
सहस्रोल्कायास्त्रमुक्तमङ्गकॢप्तिरियं मता ।
भूयो वर्णैर्मनोः षड्भिः षडङ्गानि समाचरेत् ॥

---

1. तडिदाभासमात्रं CDF; °मात्रः B.

---

१. Cf *Vishṇu Purāṇa* 3. 1. 41. २. °त्वानित्यत्व° G.

अवशिष्टौ पुनर्वर्णौ विन्यसेत्कुक्षिपृष्ठयोः ।
बद्धदिक् चक्रमन्त्रेण मन्त्रवर्णांस्तनौ न्यसेत्" ॥

इति **शारदातिलके** (१५. २-६.) । प्रणवो बीजं मायेति शक्तिः । तदुक्तं **मन्त्रतन्त्रप्रकाशे** ।

"ज्वलत्प्रभुः श्रुतेरादिर्बिन्दुमान्विष्णुरव्ययः ।
बीजमष्टाक्षरस्य स्यात्तेनाष्टाक्षरता भवेत् ॥
अयं पञ्चदशाद्वर्णात्केवलं व्यञ्जनीकृतात् ।
उभयोर्मन्त्रशेषस्तु शक्तिरित्यस्य कथ्यत इति" ॥

साध्यनारायणो बदरीतपोवननिवासी स चान्तर्यामीति देशिकाः । तदुक्तं **मन्त्रतन्त्रप्रकाशे** । "अन्तर्यामी ऋषिश्छन्दो गायत्री"ति । प्रत्यर्णमृष्यादि यथा ।

"गौतमश्च भरद्वाजो विश्वामित्र ऋषिस्तथा ।
जमदग्निर्वसिष्ठश्च कश्यपोऽत्रिश्च कुम्भजः ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुब्जगत्यौ च विराड्वसवोऽष्टौ च देवता" इति ॥

क्रुद्धोल्कादीनां चतुर्थ्यन्तोद्धारेण स्वाहान्तता जातिस्तु (शारदातिलके ४. ३४)

"हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमादि"ति ॥

तदुक्तम्[1] ।

"क्रुद्धोल्कादिपदैर्वह्निजायान्तैर्जातिसंयुतैरि"ति ।

करन्यासोऽपि अङ्गन्यासात्प्राक्कार्यः । स यथा ।

"कुर्यात्करयोर्विधिवत्सृष्ट्यादिन्यासमष्टमन्त्रार्णैः ।
दक्षिणतर्जन्याद्या सृष्टिः स्याद्वामतर्जनी यावत् ॥
तर्जन्युभयाद्येहस्थितिः कनिष्ठाद्र्योनिका क्रमशः ।
[2]सृष्टेर्विपरीतः संहारोऽयं करे प्रोक्तः ॥

---

१. See Notes. २. So MSS; but the line is incomplete.

अष्टाङ्गविन्यासस्थितिक्रमादङ्गपञ्चकं न्यसेदि"ति ।

तत्र विशेषो नारायणीये[1] ।

"कनिष्ठादितदन्तानामङ्गुलीनां त्रिपर्वसु ।
ज्येष्ठाग्रेण क्रमात्तारुद्धानष्टाक्षराण्यसेदि"ति ॥

अष्टाङ्गन्यासे षडङ्गवदेव षडक्षराणि विन्यस्य णां उदराय नमः यं पृष्ठाय नम इति कुक्षिपृष्ठयोर्न्यसेत् । तदुक्तम् ।

"अष्टाक्षरेणाप्येष्वेव कुर्यादष्टाङ्गकं सुधीः ।
सहृच्छिरःशिखाचर्मनेत्रास्त्रोदरपृष्ठके" ॥

इति बद्धदिगिति । ऐन्द्रीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहेत्यादिप्रयोगः । छोटिकां वादयन्दिग्बन्धं कुर्या"न्मन्त्रवर्णांस्तनौ न्यसेदि"ति सृष्टिस्थितिसंहारन्यास उक्तः ।

"मूर्ध्नि चक्षुषोरास्ये हृदि नाभौ गुह्यजानुपादेषु ।
सृष्टिरियं निर्दिष्टा नाभ्यादिहृदन्तिका स्थितिस्तद्वत् ।
संहारः पादाद्यो मूर्द्धान्तः कथित एष सृष्ट्यादिरि"ति ।

मन्त्रतन्त्रप्रकाशे तु

"नाभावारभ्यते यस्तु हृदये च समाप्यते ।
स्थितिन्यासः स विज्ञेयो दृष्टादृष्टफलप्रद" इति ॥

इदमेव साम्प्रदायिकम् । तत्रैव[2] विशेषः ।

"विन्यसेद्वर्णमेकैकं बिन्द्वन्तं ध्रुववेष्टितम् ।
तत्राङ्गुलीभिर्न्यासः स्याच्छिरस्येकैव मध्यमा ।
तर्जनीमध्यमाभ्यां तु चक्षुषोर्न्यास इष्यते ।
अङ्गुष्ठानामिकाभ्यां तु मुखे न्यासः प्रकीर्त्तितः ।
गुह्ये पादे च जानौ च पञ्चापि परिकीर्त्तिताः" ॥

एवं पञ्चाङ्गाष्टाङ्गाक्षरन्यासं कृत्वा दशावृत्तिमयं विभूतिपञ्जरन्यासमाचरेत् । स यथा ( शारदातिलके १५. ७—१० ) ।

---

१. This is probably the Tantra of that name. २. See quotation from *S'âradâ*, on p. 53.

"आधारे हृदये वक्रे दोःपन्मूलेषु नासिके[1] ।
कण्ठे नाभौ हृदि कुचे पार्श्वपृष्ठेषु तत्परम् ।
मूर्द्धास्यनेत्रश्रवणघ्राणेषु तदनन्तरम् ।
दोःपत्सन्ध्यङ्गुलीषु च धातुप्राणेषु हृत्स्थले[2] ।
मूर्द्धेक्षणास्यहृत्कुक्षांसोरुजङ्घापदद्वये ।
एकैकशो न्यसेद्वर्णान् गण्डांसोरुपदषु च ।
शङ्खचक्रगदाम्भोजं[3] पदेष्ववहितो न्यसेदि"ति ॥

अत्र प्रत्येकमक्षरं प्रणवपुटितं कृत्वा न्यसेत् । यदुक्तं **नारसिंहे** ( पूर्वतापनी २. २ ) । "ओमित्येतदक्षरमिदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओङ्कारो भवती"ति । तदत्रापि तुल्यन्यायत्वाद्युक्तम् । **मन्त्रतन्त्रप्रकाशे**ऽपि च तथैवोक्तम् । प्रत्यावृत्तिसम्पूर्णेन न्यासो व्यापकं च । तदुक्तं **पद्मपादाचार्यैः** । न्यासमन्त्राणां प्रणवपुटितत्वं प्रतिपर्यायं व्यापकन्यासश्चेति श्लोकपूर्वार्द्धेनैकावृत्तिर्द्धितीयार्द्धेन द्वितीया तृतीयार्द्धेन तृतीया चतुर्थार्द्धेन तुर्याद्यष्टमान्तं पञ्च । तत्र दक्षकरसन्धिचतुष्टयाङ्गुष्ठवर्जं चतुरङ्गुलिष्वेका । अन्ये तु दक्षहस्तसन्धित्रयपञ्चाङ्गुलिष्वेकेत्यूचुः । दक्षकरे प्रथमा वामकरे द्वितीया दक्षपादे तृतीया वामपादे चतुर्थी । अन्ये तु करद्वयसन्धिष्वेका पादद्वयसन्धिष्वन्या अङ्गुष्ठद्वयवर्जं कराङ्गुलिषु तृतीया एवं पादाङ्गुलिषु चतुर्थीत्याहुः । हृदय एव त्वगादिषु पञ्चमी पञ्चमार्द्धेन नवमी श्लोकेन दशमी । तत्र गल्लांसोरुचरणेषु चतुरो वर्णान्विन्यस्य शङ्खचक्रगदापद्मस्थानेषु शिष्टांश्चतुरो वर्णांस्तदायुधमुद्रासहितान्विन्यसेत् । शङ्खादिमुद्रा यथा ।

"कनिष्ठानामिकामध्यान्तःस्थाङ्गुष्ठेऽन्तरेऽग्रतः ।
गोपिताङ्गुष्ठमूलेन समन्तान्मुकुलीकृता ।
करद्वयेन मुद्रा स्याच्छङ्खाख्येयं सुरार्चने ॥

---

१. दोष्पन्मूले सनासिके in printed edition of *S'âradâ*. २. हृद्गले edition of *S'âr*. ३. So printed text and MS. of *S'âr.*, but GJ. ज.

अन्योन्याभिमुखस्पर्शव्यत्ययेन तु वेष्टयेत् ।
अङ्गुलीभिः प्रयत्नेन मण्डलीकरणं मुने ।
चक्रमुद्रेयमाख्याता सर्वरक्षाकरी नृणाम् ॥
अन्योन्याभिमुखौ हस्तौ कृत्वा मुकुलिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ।
गदामुद्रेयमाख्याता परा मुक्तिकरी तथा ॥
अथाङ्गुष्ठद्वयं मध्ये दत्त्वापि परितः करौ ।
मण्डलीकरणं सम्यगङ्गुलीनां सा पद्ममुद्रा" ॥

ततोऽष्टतत्त्वात्मचतुष्टयमूर्त्तिपञ्जरन्यासाः । तदुक्तं (शारदातिलके १५. १०—१८)।

"अष्टार्णोऽष्टप्रकृत्यात्मा ज्ञेयोऽसौ[1] चतुरात्मनाम् ।
संयोगात्सूरिभिः प्रोक्तो विशिष्टो द्वादशाक्षरः ।
अतस्तन्मन्त्रवर्णाढ्या द्वादशस्वरसंयुताः ।
द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत् ।
केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः ।
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः ।
अर्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः ।
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।
अंशुना विष्णुमंसस्थं भगेन मधुसूदनम् ।
गले विवस्वता युक्तं त्रिविक्रममनन्तरम् ।
वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ।
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतम् ।
हृषीकेशाह्वयं पृष्ठे[2] पद्मनाभं ततः परम् ।
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।
द्वादशार्णं महामन्त्रं ततो मूर्ध्नि प्रविन्यसेत् ।
पुनः किरीटमन्त्रेण व्यापकं विन्यसेत्तत" इति ॥

अष्टार्णोऽष्टप्रकृत्यात्मेत्यनेन सूचितो मूर्त्तिपञ्जरन्यासात्प्राक्तत्त्वन्यासः

---

१. अस्मात् GJ. २. पृष्ठौ G.

कर्त्तव्यः स द्विविधः सृष्टिसंहाररूपः । तत्र संहारे मन्त्रोऽनुलोमः सृष्टौ मन्त्रः प्रतिलोमः । तत्त्वानि पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्प्रकृतिरूपाणि । स्थानानि तु पादलिङ्गहृदयमुखमूर्द्धहृद्धृदयानि सप्त । सर्वतनौ चैकम् । सृष्टौ तत्त्वानुलोमवज्ज्ञेयम् । तत्र प्रयोगः । ओं ओं ओं नमः पराय पृथिव्यात्मने नमः पादयोः । ओं नं ओं नमः पराय जलात्मने नमो लिङ्ग इत्यादि संहारे । ततः सृष्टौ प्रयोगः । ओं यं ओं नमः पराय प्रकृत्यात्मने नमः सर्वशरीरे । ओं णां ओं नमः पराय महदात्मने नमो हृदीत्यादि । तदुक्तम् ।

"क्षितिसलिलानलपवनव्योमाहङ्कृतिमहत्प्रकृत्याख्यैः ।
व्युत्क्रमगदितैरेतैः क्रमगतमन्त्रार्णसंयुतैर्मन्त्री ॥
चरणान्धुहृदयवक्त्रकहृद्धृदयव्यापकेषु विन्यसेत् ।
संहारोऽयं गदितो विपरीता सृष्टिरस्य निर्दिष्टे"ति ॥

चतुरात्मनामित्यनेन सूचितो विन्दुनादशक्तिशान्तिरूपाणामात्मादीनां चतुर्णां शरीरे व्यापकत्वेन न्यासस्तत्त्वन्यासानन्तरं कर्त्तव्यः । प्रयोगाश्च । ओं विन्दुरूपात्मने नमः । ओं नादरूपान्तरात्मने नमः । ओं शक्तिरूपपरमात्मने नमः । ओं शान्तिरूपज्ञानात्मने नम इति । ततो मूर्त्तिपञ्जरन्यासः । तन्मन्त्रवर्णाद्या द्वादशाक्षरमन्त्रवर्णाद्या द्वादशस्वरा नपुंसकचतुष्टयव्यतिरिक्ताः । ओं अं केशवाय धात्रे नम इति ललाटे । आं नं नारायणाय अर्यम्णे नम इति कुक्षौ । कुक्षिशब्देन नाभिर्ग्राह्या । ई ओं माधवाय मित्राय नम इति हृदीत्यादिप्रयोगः ॥ ततो द्वादशार्णं वासुदेवं महामन्त्रं चाष्टाक्षरं मूर्ध्नि विन्यसेत् । तदुक्तं **मन्त्रतन्त्रप्रकाशे** ।

"अष्टाक्षरेण सहितं विन्यसेद्द्वादशाक्षरमि"ति ।

ततः किरीटमन्त्रेण व्यापकं कुर्यात्तस्योद्धारः (शारदातिलके १५. १८—२१) ।

"ब्रूयात्किरीटकेयूरहारं मकरकुण्डलम् ।
चक्रशङ्खगदाम्भोजहस्तं पीताम्बरंधरम् ।

---

१. See first line of last quotation from *S'árada*. २. नं आंJ.

श्रीवत्साङ्कितवक्षोऽन्ते स्थलशब्दमुदीरयेत् ।
श्रीभूमिसहितं स्वात्मज्योतिर्द्वयमुदाहृतम् ।
पश्चाद्दीप्तिकरायेति सहस्रादित्यतेजसे ।
नमोऽन्तः प्रणवाद्योऽयं किरीटमनुरीरितः" ॥

कुण्डलमिति कुण्डलालङ्कृतेति ज्ञेयम् । उक्तं **मन्त्रतन्त्रप्रकाशे** ।

"तारः किरीटकेयूरहारान्ते मकरं पदम् ।
कुण्डलालङ्कृतेत्यन्ते" इत्यादि ।
"एवं न्यासं तनौ कृत्वा ध्यायेन्नारायणं परम्" ॥

नारायणलक्षणं तु **हयशीर्षपञ्चरात्रे** ।

"पङ्कजं दक्षिणे यस्य पाञ्चजन्यं तथोपरि ।
वामाधस्तु गदा यस्य चक्रं चोर्ध्वे व्यवस्थितम् ।
आदिमूर्त्तेस्तु भेदोऽयं केशवे तु प्रकीर्त्तित" इति ॥

इति केशवलक्षणमुक्त्वा

"अधरोत्तरभावेन कृतमेतत्तु यत्र वै ।
नारायणाख्या सा ज्ञेया स्थापिता भुक्तिमुक्तिदे"ति ॥

**मन्त्रतन्त्रप्रकाशे**ऽपि ।

"सव्यान्यपाणौ प्रथमे तु शङ्खं
विभ्राणमब्जं तदनन्तरे च ।
आद्ये गदा वामकरेऽथ चक्रं
विराजयन्तं भुवनानि भासे"ति ॥

अथ ध्यानम् ( शारदा १५. २२ ) । "उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् । केयूराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे" ॥

ध्यानविशेषास्तु ।

"वामे विचिन्त्या कमलायताक्षी
हेमाब्जवर्णा कमला च देवी ।

१. *S'âradâtilaka* xv. 21.

विभूतिकामेन सुरत्नहारा
प्रेम्णा सृजन्ती नयने हरौ या ॥
तं च देवं सुवर्णाभं चिन्तयेद्रत्नभूषितम् ।
क्षेत्रधान्यसुवर्णानां प्राप्तये धरणीं स्मरेत् ॥
देवीं दूर्वादलश्यामां दधानां शालिमञ्जरीम् ।
चिन्तयेद्भारतीं देवीं वीणापुस्तकधारिणीम् ॥
दक्षिणे देवदेवस्य पूर्णचन्द्रनिभाननाम् ।
क्षीराब्धिफेनपुञ्जाभे वसानां श्वेतवाससी ॥
भारत्या सहितं विष्णुं ध्यायेद्देवं परात्परम् ।
वेदवेदार्थसंवेदी जायते सर्ववित्तम " इति ॥

**नारायणीये तु ।**

"प्रणवद्वयमध्यस्थो नमोन्तश्च सबीजकः ।
निर्बीजो मोक्षकृन्मन्त्रो यथोक्तप्रणवादिक" इति ॥

अत्र ध्यानानन्तरं श्रीवत्सकौस्तुभवनमालायुधमुद्राः प्रदर्शयेत् । तल्लक्षणानि (तन्त्रसारस्य[१] २१६ पत्रे)।

"अन्योन्यपृष्ठकरयोर्मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन तु बध्नीयात्कनिष्ठामूलसंश्रिते ।
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिता ॥
अनामापृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ।
कनिष्ठिकाभ्यां बध्नीयादनामां दक्षतर्जनीम् ।
गृहीत्वा दक्षिणाङ्गुष्ठमध्यमानामिकात्रयम् ।
उच्छ्रयित्वा तत्र वामतर्जनीमध्यमे न्यसेत् ।
दक्षिणे मणिबन्धे च वामाङ्गुष्ठं तु योजयेत् ।
मुद्रेयं कौस्तुभस्योक्ता दर्शनीया प्रयत्नतः ॥
स्पृशेत्कण्ठादि पादान्तं तर्जन्याङ्गुष्ठनिष्ठया ।
करद्वयेन मालावन्मुद्रेयं वनमालिकेति" ॥

---

१. The Benares edition. It differs, however, from the text in the case of the कौस्तुभमुद्रा.

पुरश्चरणं तु ( शारदा १५. २३—२५ ) ।

"विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशैः सरसिजैर्जुहुयान्मधुराप्लुतैः ।
पीठे सम्पूजयेद्देवं विमलादिसमन्विते ।
विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशानानुग्रहा नवमी मता" ॥

आचार्यैस्तु द्वात्रिंशल्लक्षैः पुरश्चरणमुक्तं तत्कलियुगाभिप्रायं कलौ तु चतुर्गुणं पुरश्चरणमित्याहुः । पीठमन्त्रस्तु ( शारदा १५. २५—२८ ) ।

"नमो भगवते ब्रूयाद्विष्णवेऽथ पदं वदेत् ।
सर्वभूतात्मने वासुदेवायेति वदेत्ततः ।
सर्वात्मसंयोगपदाद्योगपद्मपदं पुनः ।
पीठात्मने हृदन्तोऽयं मन्त्रस्ताराद्य ईरितः ।
दत्त्वानेनासनं मन्त्री मूर्त्तिं मूलेन कल्पयेत् ।
आवाह्य पूजयेद्देवं सुगन्धिकुसुमादिभिः ।
अङ्गान्यभ्यर्च्य मन्त्रार्णान् केसरेषु समर्चयेत्" ॥

पञ्चाङ्गान्याग्नेयादिषु कोणेषु दिशास्वस्त्रं कर्णिकायां यजेत् । तत ओं नमो नं नम इत्येवं मन्त्रवर्णान् केसरेषु यजेद्देवम् । द्वे एते आवरणे ( शारदा १५. २९—३७ ) ।

"दलेषु वासुदेवाद्या मूर्त्तीः शक्तिसमन्विताः ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ।
हिमपीततमालेन्द्रनीलाभान्पीतवाससः ।
शङ्खचक्रगदाम्भोजधरा एताश्चतुर्भुजाः ।
शान्तिं श्रियं सरस्वत्या रतिं कोणदलेषु ताः ।
श्वेतकाञ्चनगोदुग्धदूर्वावर्णाः सुभूषिताः ।
हेतीरर्चेद्दलाग्रेषु चक्रशङ्खौ गदाम्बुजे ।
कौस्तुभं मुसलं खड्गं वनमालां यथाक्रमात् ।
रक्ताच्छपीतकनकश्यामकृष्णासिपाण्डुरान्[1] ।

---

१. पाण्डुराः GJ.

बहिरग्रे समभ्यर्चेद्गरुडं कुङ्कुमप्रभम् ।
मुक्तामाणिक्यसङ्काशौ दक्षिणोत्तरयोर्निधी ।
ध्वजं वरुणदिग्भागे श्यामलं पूजयेत्ततः ।
अरुणं विघ्नमाग्नेये श्याममार्यं निशाचरे ।
श्यामां दुर्गां वायुकोणे सेनान्यं पीतमीश्वरे ।
इन्द्रादीन्पूजयेत्पश्चाद्वज्राद्यायुधसंयुतान् ।
इति सम्पूजयेद्विष्णुं प्रोक्तैरावरणैः सह ।
धर्मार्थकामाँल्लब्ध्वान्ते विष्णोः सायुज्यमाप्नुयात्'' ॥

इत्यावरणसप्तकपूजा । मन्त्रवर्णध्यानमुक्तं **महाकपिलपञ्चरात्रे** ।

''ओङ्कारं तु सदा ध्येयं ज्योतिर्मालासमाकुलम् ।
नकारं मेघवर्णाभं मोकारं चिन्तयेत्ततः ।
भिन्नाञ्जनसमाकारं तृतीयं बीजमुत्तमम् ।
नाकारं श्यामवर्णाभं सौम्यरूपं सुशोभनम् ।
राकारं जलवर्णाभं सम्यक्सन्दीप्ततेजसम् ।
धूम्रवर्णं सदा ध्येयं यकारं परमुत्तमम् ।
अनौपम्यगुणाकारं णाकारं च विचिन्तयेत् ।
यकारं तु ततो ध्येयं पद्मरागसमप्रभमि''ति ॥

अर्थे उद्देश्ये श्रीबीजादिर्जप्तव्यः । तदुक्तम् ।

''श्रीबीजेन युतं मन्त्रं तत्कामस्तन्मना जपेदि''ति ।

कामना जपेदिति । कामनायामपि विशेषः ।

''नारसिंहमिवात्मानं देवं ध्यात्वातिभैरवम् ।
मन्त्रेण स्पर्शयेच्छास्त्रं नाविजित्य निवर्त्तते ।
नारसिंहेन बीजेन मन्त्रं योज्य तदा जपेत् ।
शतमष्टोत्तरं जप्त्वा वामहस्ताभिमन्त्रितः ।
पुनः पुनश्च यः सिञ्चेत्सर्पदष्टोऽपि जीवति ।
गारुडेन समायुक्तं पञ्चार्णेन तदा जपेत् ।
निर्विषीकरणे ध्यायेद्विष्णुं गरुडवाहनम् ।
अशोकफलके पक्षीन्द्रमालिख्याशोकसंहतौ ।

अशोकपुष्पैराराध्य भगवन्तं तदग्रतः ।
जुहुयात्तानि पुष्पाणि त्रिसन्ध्यं सप्तरात्रकम् ।
प्रत्यक्षो जायते पक्षी वरमिष्टं प्रयच्छति ।
गाणपत्यसमायुक्तं जपेल्लक्षं पयोव्रतः ।
महागणपतिं देवं प्रत्यक्षमिह पश्यति ।
भारतीबीजसंयुक्तं षण्मासात्तज्जपार्चनात् ।
साक्षात्सरस्वतीं देवीं प्रत्यक्षमिह पश्यति" ॥

तथा ।

"योजयेत्प्रणवपूर्वं मन्त्रं त्रैवर्णिकः पुमान् ।
योषितश्च तथा शूद्रा जपेयुः प्रणवं विना ।
आदावष्टाक्षरस्य स्यात्प्रणवः सार्वकामिकः ।
आदावन्ते यदा ह्येष ज्ञानवृद्धिस्तदा भवेत् ।
आदितः संहितां कुर्यादन्ततस्तु न संहितामि"ति ॥

कल्पोक्तं यन्त्रमुच्यते ।

"अष्टपत्रं च षट्कोणं रविसंख्यदलाम्बुजम् ।
दन्तपत्रं च तद्बाह्ये वृत्तं भूमिपुरं शुभम् ।
स साध्यं कर्णिकायां तु लिखेदाद्यस्वरं सुधीः ।
अष्टपत्रेषु मूलार्णान् पत्राग्रे श्रीकरं लिखेत् ।
षट्कोणे चक्रमन्त्रार्णान् सूर्यारे द्वादशार्णकम् ।
दन्तपत्रे मन्त्रराजं वृत्ते नृहरिबीजकम् ।
षण्मन्त्रैरपि संयुक्तं साक्षाद्विष्णोश्च मन्दिरम् ।
आवाह्य मन्त्रैराराध्य सूत्रैर्बध्वा दृढं वहन् ।
सर्वदा तस्य वर्द्धन्ते धनारोग्यार्थसम्पदः ।
सायुज्यं सार्ष्टिसालोक्ये सारूप्यं चाथ वाञ्छितम्" ॥

इति यन्त्रोद्धारः स्पष्टः । इदमेवाभिप्रेत्योक्तं "यं दृष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात् । ओं नमो नारायणायेति मन्त्रोपासक" इति । "तदिदं पुरं पुण्डरीकमि"ति च । यथोक्तवैष्णवमहापीठमभिप्रेत्योक्तं "इदमेव च वैकुण्ठभुवनम्" । अयं चाष्टाक्षर आचार्यैर्व्या-

**ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदन इति सर्वभूतस्थमेकं नारायणं कारणरूपमकारं परं ब्रह्म ओमिति। एतदथर्वशिरो योऽधीते प्रातरधीयानो रात्रिकृतं पापं नाशयति सायमधीयानो दिवसकृतं पापं नाशयति मध्य-**

---

ख्यातः। चतुर्थ्यन्तेन पञ्चाक्षरेण पदेन पञ्चभूतान्युच्यन्ते तानि मोहो माया न भवन्ति किन्तु ओं ब्रह्मैवेति। अयं च वैष्णवमन्त्राणां प्रकृतिर्नातः परोऽन्यो मन्त्रोऽस्ति। किञ्चेदं नाम सर्वेभ्यः साधनेभ्योऽधिकम्। तथा च **ब्रह्मवाक्यम्।**

"सकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम्।
गङ्गादिसर्वतीर्थेषु स्नातो भवति पुत्रके"ति॥

कथं ज्ञायत ईदृशे पुर आदिदेवो वसतीति। लिङ्गैः। कानि लिङ्गानीत्यपेक्षायामाह ब्रह्मण्य इति। ब्रह्मणे ब्रह्मजातये हितो ब्रह्मण्यः[1]। कदा ब्राह्मणकार्याणि कृतानीत्यपेक्षायामाह देवकीपुत्र इति। कृष्णावतारे बहूनि ब्राह्मणकार्याणि पुराणप्रसिद्धानि। कृष्णावतारो वैकुण्ठवासिनः सत्त्वे लिङ्गमिति भावः। लिङ्गान्तरम्। ब्रह्मण्यः। ब्रह्मणे पद्मयोनये हितः। कथं ज्ञायते। मधुसूदन इति। "[2]मधुकैटभौ दुरात्मानौ हन्तुं ब्रह्माणमुद्यतावि"ति प्रसिद्धेर्ब्रह्मणो रक्षार्थं मधुं सूदयति निरस्यति मधुसूदनः। **आत्मबोधोपनिषदि** तु "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो गरुडध्वजः। ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो मधुसूदन" इति पूर्णः श्लोकः पठ्यते। अत्र त्वाद्यन्तपादावेव प्रत्याहारन्यायेन पठितौ। तर्हि किमयं परिच्छिन्नो नेत्याह सर्वभूतस्थमित्यादि। कारणरूपमकारम्। अकारो ब्रह्मा तेन कारणरूपता। वस्तुतस्तु परं ब्रह्म ओङ्कारवाच्यमित्यर्थः। अः कृष्ण इति कोशादकारशब्दवाच्यं वा। एतद्ग्रन्थाध्ययने फलमाह एतदथर्वशिर इति।

---

१. "तथा ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति" *Mahâbhâshya*. 5.1.7.
२. Cf. *Mahâbhârata* 3. 12. 39 ( See Notes ).

न्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपात[1]केभ्यः प्रमुच्यते सर्ववेदपारायणपुण्यं लभते नारायणे सायुज्यमाप्नोति नारायणे सायुज्यमाप्नोतीति ॥ ५ ॥

इत्यथर्ववेदे नारायणोपनिषत्समाप्ता ॥ ३३ ॥

---

मध्यन्दिनं प्राप्यादित्यस्याभिमुखोऽधीयानः पञ्चभ्यो महापातकेभ्यो ब्रह्महत्यादिभ्यः । उपपातकेभ्यो गोहत्यादिभ्यः प्रमुच्यते । द्विरुक्तिः समाप्त्यर्था ॥ ५ ॥

**नृसिंहपुराणे** चास्य महिमोक्तो वर्णध्याने च विशेष उक्तः फलभेदाभिप्रायेण । तद्यथा ( १८. ५-८ ) ।

"अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयम् ।
छन्दश्च दैवी गायत्री परमात्मा च देवता ।
शुक्लवर्णं च ओङ्कारं नकारं रक्तमुच्यते ।
मोकारं वर्णतः कृष्णं नाकारं रक्तमुच्यते ।
राकारं कुङ्कुमाभं तु यकारं पीतमुच्यते ।
णाकारमञ्जनाभं तु यकारं बहुवर्णकम् ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः" ॥

इति वर्णध्यानम् ।

"[1]जपेत्सहस्रं नियुतं शुचिर्भूत्वा समाहितः ।
मासि मासि तु द्वादश्यां विष्णुभक्तो द्विजोत्तम ।
[2]शुचिर्भूत्वा जपेद्यस्तु नमो नारायणं शतम् ।
स गच्छेत्परमं देवं नारायणमनामयम् ।
गन्धपुष्पादिभिर्विष्णुमनेनाराध्य यो जपेत् ।
महापातकयुक्तोऽपि मुच्यते नात्र संशयः ।
हृदि कृत्वा हरिं देवं मन्त्रमेनं तु यो जपेत् ।

---

1. °पातकात् BCD.

---

१. Chap. XVIII. 14-29. २. स्नात्वा शुचिः MSS. of Purâṇa.

सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् ।
प्रथमेन तु लक्षेण आत्मशुद्धिर्भविष्यति ।
द्वितीयेन तु लक्षेण मन्त्रशुद्धिमवाप्नुयात् ।
तृतीयेन तु लक्षेण स्वर्गलोकमवाप्नुयात् ।
चतुर्थेन तु लक्षेण हरेः सामीप्यमाप्नुयात् ।
पञ्चमेन तु लक्षेण निर्मलं ज्ञानमाप्नुयात् ।
तथा षष्ठेन लक्षेण भवेद्विष्णौ स्थिरा मतिः ।
सप्तमेन तु लक्षेण स्वरूपं प्रतिपद्यते ।
अष्टमेन तु लक्षेण निर्वाणमधिगच्छति ।
स्वस्वधर्मसमायुक्ता जपं कुर्युर्द्विजातयः ।
एतत्सिद्धिकरं मन्त्रमष्टाक्षरमतन्द्रितः ।
दुःस्वप्नासुरपैशाचा उरगा ब्रह्मराक्षसाः ।
जपिनं नोपसर्पन्ति चौरक्षुद्राधयस्तथा ।
एकाग्रमतिरव्यग्रो विष्णुभक्तो दृढव्रतः ।
जपेन्नारायणं मन्त्रमेतन्मृत्युभयापहम् ।
मन्त्राणां परमो मन्त्रो देवतानां च दैवतम् ।
गुह्यानां परमं गुह्यमोङ्काराद्यक्षराष्टकम् ।
आयुष्यं धनपुत्रांश्च पशून् विद्यां महद्यशः ।
धर्मार्थकाममोक्षांश्च लभते च जपन्नरः ।
एतत्सत्यं च धर्म्यं च वेदश्रुतिनिदर्शनात् ।
एतत्सिद्धिकरं नृणां मन्त्ररूपं न संशयः ।
ऋषयः पितरो देवाः सिद्धास्त्वसुरराक्षसाः ।
एतदेव परं जप्त्वा परां सिद्धिमितो गताः ।
ज्ञात्वा यस्त्वात्मनः कालं शास्त्रान्तरविधानतः ।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ।
नारायणाय नम इत्ययमेव सत्यं
संसारघोरविषसंहरणाय मन्त्रः ।

१. सिद्धिं one Ms. of Purâṇa.

संशृण्वन्तु भव्यमतयो मुदितास्त्वरागा
उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः" ॥

इति नृसिंहपुराणे नारायणाध्यायः ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां नारायणप्रदीपिका ॥

इति लघुनारायणोपनिषद्दीपिका समाप्ता ॥

शङ्करानन्दविरचिता

# नारायणोपनिषद्दीपिका ।

# शङ्करानन्दविरचिता
# नारायणोपनिषद्दीपिका ।

ओं नमो नारायणाय ॥

नारायणोपनिषदं भेदपर्वतभेदनीम् ।
व्याख्यास्ये ब्रह्मविद्याया जननीं पापहारिणीम् ॥
सम्बन्धो विषयस्तद्वत्साधिकारिप्रयोजनः ।
सर्वोपनिषदां तुल्यस्तस्मान्नात्रोच्यते पृथक् ॥

**अथ पुरुषो ह वै....प्रजाः सृजेयेति । पुरुषः** परिपूर्णो देशकालवस्तुपरिच्छेदशून्य इत्यर्थः । **ह** प्रसिद्धः सर्वासूपनिषत्सु । **वै** स्मर्यमाणः । आपो नारास्ता अयनं यस्य स **नारायणः ।** अथवा नराः प्रतिबिम्बकल्पा अयनमात्मत्वेनाश्रयो यस्य स नरायणः । नरायण एव नारायणः । यद्वा नरा विक्षिप्तचित्तास्तेषामाश्रयो विद्या नरायणं तस्यायनमाश्रयत्वेन सम्बन्धान्नारायणः । यद्वा आरा दुःखकारणानि न आरा नारा ब्रह्मचर्यादीनि साधनान्युदर्कसुखानि तानि अयनं प्राप्तिसाधनं यस्य स नारायणः । यद्वा आराः संसारचक्रस्य कामक्रोधादयस्तेषामयनमविद्या येषां जीवानां ते आरायणा आत्मबोधशून्यास्तद्विपरीत आनन्दात्मा नारायणः । अथवा नारायणावतारो नारायणो मुनिर्निर्वृत्तिमार्गनिरतानां परमो गुरुः । **अकामयत** कामनामकुरुत । कामनामाह **प्रजाः सृजेयेति ।** प्रजाः पञ्चभूतभौतिकरूपाः सृजेय सृष्टिं कुर्वीय । इति अनेन प्रकारेण सङ्कल्प्य सृष्टिं समग्रां ससर्जेति वहिरेवावगन्तव्यम् । श्रुतिस्तु विभूतिमत्सत्त्वानां सृष्टिमाह **नारायणाद्ब्रह्मा जायते....नारायणे प्रलीयन्ते । नारायणात्** उक्तात् **ब्रह्मा** हिरण्यगर्भो विराट् सत्यलोकाधिष्ठाता वा **जायते** उत्पद्यते सर्वासु सृष्टिष्विति शेषः । **नारायणात्** उक्तात् **इन्द्रः** त्रिलोकीपतिः **जायते** उत्पद्यते ।

**द्वादश**संख्याका **आदित्याः** मासास्तदधिष्ठातारो वा धात्रादयो **रुद्रा** एकादशेन्द्रियाणि अपरे चैकादश देवगणरूपाः । किं विशेषगणनया **सर्वा** अखिला **देवता** देवापरदेवता वस्वाद्या इत्यर्थः । न केवलाः सर्वा देवताः किन्तु **सर्वाणि च भूतानि** स्थावरजङ्गमानि समष्टिभूतानि । चकार उक्तानुक्तसमुच्चयार्थः । जायन्त इति शेषः । ननु यथा कुलालाच्चक्रदण्डमृदादिसहकृताद्घटस्योत्पत्तिः किं तथा नारायणात्सर्वस्योत्पत्तिरित्याशङ्क्य नेत्याह **नारायणादेव** न त्वन्यसहकृतात्कुलालादेरिव **समुत्पद्यन्ते** सम्यग् जायन्त उक्तानि सर्वाणीति शेषः । ननु नारायणादेवास्तूत्पत्तिस्तथापि प्रलयोऽन्यस्मिन् भवतु न यथा लूतातन्तूनामित्यत आह **नारायणे प्रलीयन्ते** प्रकर्षेण लीयन्त उक्तानि सर्वाणीति शेषः । अभ्यासस्त्वध्यायसमाप्त्यर्थः ॥ १ ॥

जगत्कारणत्वं नारायणस्योक्त्वेदानीं नित्यत्वादिं क्रममाह **अथ नित्यो देव एकः....यद्भूतं यच्च भव्यम्** । अथ यस्माज्जगत्कारणं तस्मात् **नित्यो** विनाशरहितो **देवः** स्वयम्प्रकाश **एको** देशकालवस्तुपरिच्छेदशून्यः । इदानीमेकत्वमुत्पादयति **ब्रह्मा** अपि नारायणः । **नारायणो** व्याख्यातः । **शिवश्च** मङ्गलरूपोऽपि भवानीपतिः । **शक्रः** त्रिलोकीपतिः । **द्वादशादित्या** अपि **नारायणः** । **वसवो**ऽष्टसंख्याका अग्निपृथिवीवाय्वन्तरिक्षादित्यद्युचन्द्रमोनक्षत्ररूपाः । **अश्विनौ** देवभिषजावपि । चकारपञ्चकं वाक्यपञ्चकेऽपि प्रत्येकमुक्तानुक्तसमुच्चयार्थं । **सर्वे** निखिला **ऋषयो**ऽतीन्द्रियस्य द्रष्टारो वेदव्यासादयः । **कालश्च** लवादिद्विपरार्द्धावसानव्यवहारकारणभूतोऽपि । **दिशश्च** प्राच्याद्या अपि । **अधश्च** अधोभागोऽपि । **ऊर्ध्वं च** ऊर्ध्वभागोऽपि । **अन्तर्बहिश्च** शरीरादेः अन्तर्बहिरपि **नारायणः** । चकारपञ्चकं पूर्ववद्व्याख्येयम् । किंबहुना **नारायण एव** उक्तपूर्वो न त्वन्यः कश्चन **इदं** विविधप्रत्ययगम्यं **सर्वं** निखिलम् । वर्तमानमेवेति बुद्धिं वारयति । **यत्** प्रसिद्धं **भूतं** अतीतं **यत्** अपि। चकार उक्तानुक्तसमुच्चयार्थः ।

**भव्यं** भावि । इदानीमुक्तमेकत्वमङ्गीकृत्य पुनः पुनः कानिचिद्वि-शेषणान्युक्तं नारायणं प्रतिवक्तुमाह **अथ नित्यो निष्कलः.... य एवं वेद** । अथ यस्मादेकस्तस्मात् **नित्यो** विनाशकारणाभा-वात्पूर्वं प्रतिज्ञातस्य नित्यत्वं स्यान्नोपसंहृतिरिति न पुनरुक्तम् । **निष्कलः** प्राणादिकलारहितः । अनेन कार्याभावो दर्शितः । नि-र्गतानि आख्यातानि क्रियापदानि यस्मात्स **निराख्यातः** । अ-नेन सिद्धवस्तुस्वरूपतोक्ता । **निर्विकल्पो** गता विकल्पाः कोटि-द्वयात्मका वस्तुशून्या वा प्रत्यया यस्मात्स निर्विकल्पः । अनेन प्र-माणज्ञानागम्यत्वमुक्तम् । **निरञ्जनः** कारणशून्यः । **शुद्धो** नाम-रूपक्रियाशून्यः । **अद्वितीयः** स्वव्यतिरिक्तभावाभावरहितः । **न द्वितीयोऽस्ति कश्चित्** उक्तान्नारायणाद्व्यतिरिक्तः कश्चिद्भावो-ऽभावो वा द्विसंख्यापूरणो नास्ति । **यो** नारायणज्ञानी **एवं** अद्वि-तीयं नारायणं **वेद** जानाति तस्य नारायणात्मनो न द्वितीयोऽस्ति कश्चिदुक्तमेव फलत्वे पठनीयम् ॥ २ ॥

**रुद्रं स सारथिं कृत्वा....पदमव्ययम्** । **रुद्रं** नारायणात्म-कत्वबोधं बुद्धिलक्षणम् । **स** नारायणात्मकज्ञानी । **सारथिं** इ-न्द्रियाश्वयुक्तस्य शरीररथस्य नेतारम् । **कृत्वा** विधाय । **मनःप्र-ग्रहवान्** मनोऽन्तःकरणभेदो ज्ञानशक्तिः प्रग्रह इन्द्रियाश्वरश्मि-भूतो यस्यास्ति स मनःप्रग्रहवान् । **पुमान्** नरः । **प्रयाति** प्रक-र्षेण गच्छति । **परमं** उत्कृष्टम् । **पारं** अविद्याजलधेः परं तीरम-विद्यया सकार्यया असंस्पृष्टमित्यर्थः । **विष्णवाख्यं** विष्णुर्व्यापन-शीलस्तदाख्यस्य नामरूपकर्महीनस्य यस्य तद्विष्णवाख्यम् । **पदं** प-द्यते गम्यतेऽहं तदस्मीति पदम् । **अव्ययं** व्ययः शनैःशनैर्विना-शस्तद्रहितम् । उपलक्षणमिदं जन्मादिभावाविकरणमशेषविशेषशू-न्यमित्यर्थः ॥ इदानीं नारायणस्य ज्ञानमज्ञेयं नातोऽधिकमित्याहुः **एतद्वै नारायणस्योपनिषदं....अमृतत्वं च गच्छतीति** । **एतद्वै** उक्तमेव । **नारायणस्योपनिषदं** सामीप्येन तादात्म्यल-क्षणेनावस्थानं कारयित्वा नितरामहम्ममादिग्रन्थीन् शिथिलीकृत्या-

विद्यां सकार्यां सादयति विनाशयतीत्युपनिषन्नारायणविद्या तत्प्रतिपादिका श्रुतिरपि । इह सा तां विजानीयादिति शेषः । **यः** पाठकः । **ह** प्रसिद्धः । **वै** स्मर्यमाणः । **नारायणस्योपनिषदं** व्याख्यातम् । **अधीते** पठति सार्थामवगच्छतीत्यर्थः । **सोऽध्येता** । **सर्वेभ्यो** निखिलेभ्यः । **घोरेभ्योऽघोरेभ्यो** ब्रह्मकारणेभ्य (?) इत्यर्थः । **विमुक्तो भवति** स्पष्टम् । न केवलमेतन्किन्तु **स** उक्तः । **सर्वांश्च** अखिलानपि । चकार उक्तानुक्तसमुच्चयार्थः । **लोकान्** कर्मफलभूतान् । **आप्नोति** प्राप्नोति । अपि च **ब्रह्मत्वं च** हिरण्यगर्भत्वमपि । चकारः प्रकृतिप्राप्तिमप्याह । **गत्वा** लब्ध्वा । **अमृतत्वं च** आनन्दात्मस्वरूपमपि । चकारादिच्छानुसरणादपि । **गच्छति** प्राप्नोति ॥ ३ ॥

इदानीं नारायणमन्त्रमुद्धरति **ओमित्येतदग्रे व्याहरेत्**.... **ततोऽमृतत्वमश्नुत** इति । **ओं** स्वरूपग्रहणमिदम् । **इति** करणार्थः । **अग्रे** प्रथमम् । **व्याहरेत्** उच्चरेत् । **नम** इदमक्षरस्वरूपग्रहणम् । **इति** अनुकरणार्थः । **द्वितीयं** पश्चात् । अन्ते च नारायणायेति व्याहरेदिति श्रौतेऽर्थे चानुषज्यते । इदानीमस्य मन्त्रस्याष्टाक्षराणि गणयति **ओमिति** व्याख्यातं **एकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि** । स्पष्टम् । **एतद्वै** उक्तमेव **नारायणस्याष्टाक्षरं** ओं नमो नारायणायेत्यष्टाक्षरयुक्तं **पदं** पदनीयमवगन्तव्यमित्यर्थः । **यो ह वै नारायणस्याष्टाक्षरं पदं** स्पष्टं **अध्येति** सपाठं सार्थं च स्मरति । **अनपब्रुवः** । अपब्रुवोऽकीर्त्तिभाग्वागादिदोषेणाभिभूतादिरित्यर्थस्तद्विपरीतोऽनपब्रुवः । **सर्वं** निखिलं शतसंवत्सरपर्यन्तं **आयुः** शरीरात्प्राणानामनिर्गमकारणं **एति** गच्छति । न केवलं जीवनं किन्तु **रायस्पोषं** सुवर्णादिपुष्टिं **गौपत्यं** गोपतिभावस्तं पशुपतित्वं **विन्दते** प्राप्नोति । किञ्च सुवर्णगोभिः पुष्टोऽनपब्रुवो दीर्घायुः प्रजाशून्यः स्यादित्याशङ्क्य नेत्याह प्रजापतेः सन्तानवतो गृहस्थस्य भावः **प्राजापत्यं** तत् । न

केवलमेनं लोकं विन्दते किन्तु परमपीत्याह **ततः** कीर्त्तिसुवर्णगो-प्रजायुःप्राप्त्यनन्तरं जीवन्मुक्तोऽ**मृतत्वं** ब्रह्मज्ञानं तत्साध्यं फलं **अश्नुते** प्राप्नोति । **ततोऽमृतत्वमश्नुत** इत्यभ्यास उपनिषत्स-माप्त्यर्थः ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशङ्करानन्दभग-वतः कृतिर्नारायणोपनिषद्दीपिका समाप्ता ॥

---

## नारायणकृतदीपिकासहिता

# आत्मबोधोपनिषत् ।



ॐ नमः । प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपमकार उकारो मकार इत्यक्षरं प्रवणं तमेतदोमिति । य[1]मिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात् । ॐ नमो नारायणाय शङ्खचक्रगदाधराय । तस्मादों नमो नारायणायेति मन्त्रोपासको[2] वैकुण्ठं भगवल्लोकं गमिष्यति[3] । अथ यदिदं पुरं ब्रह्मपुरमिदं पुण्डरीकं वेश्म । तस्य य

---

ॐ नमः सिद्धम् ॥

सर्वश्रुत्यर्थसन्दोह आत्मबोधफला ह्यसौ ।
आत्मबोधस्योपनिषदखण्डाखण्डबोधिनी ॥

इयमष्टाक्षरनारायणोपनिषद्व्याख्यानायात्मबोधोपनिषदारभ्यते श्रुत्यापि श्रुतिव्याख्यानं न विरुद्धं मन्त्राणामिव ब्राह्मणेन । प्रत्यगानन्दमित्यादि इतिशब्दान्तं तत्रत्यग्रन्थस्य प्रतीकम् । तस्य तात्पर्यं अक्षरं प्रणवमिति । यं दृष्ट्वेत्यस्यार्थतः प्रतीकं यमिष्ट्वेत्यादि नारायणायेत्यन्तम् । नारायणायेत्युक्तस्य नारायणस्य ध्यानाय स्वरूपकथनं शङ्खचक्रगदाधरायेति । तस्माद्य इति पुरस्कारेण ॐ नमो नारायणायेति मन्त्रोपासक इत्यस्योत्तरेणान्वयं दर्शयति ॐ नम इत्यादि । वैकुण्ठपदव्याख्यानं भगवल्लोकमिति । गमिष्यन्तीत्यपपाठ इत्याह गमिष्यतीति । तदिदमित्यादेर्व्याख्यानं अथ यदिदमिति । पुरं नाम ब्रह्मपुरं पुण्डरीकं नाम वेश्म । विज्ञानघनमित्यस्य व्याख्यानं तस्य

---

1. यमुक्त्वा A. 2. मन्त्रोपासनं B; मन्त्रोपायनं D. 3. गमयिष्यति BD.

आत्मा हेमपुण्डरीकमध्ये तस्मात्कारणरूपं बोधस्वरूपं विज्ञानघनम् । तस्मात्तडिदाभमात्रं दीपवत्प्रकाशः ।

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो गरुडध्वजः ।
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो मधुसूदनः ॥

सर्वभूतस्थमेकं नारायणं कारणरूपमकारं[1] परं ब्रह्म शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्न सीदति । द्वैतादद्वैतमभयं भवति । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । हृत्पद्ममध्ये सर्वं तत्प्रज्ञानेत्रं प्रज्ञानेत्रे प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके

---

य इत्यादि । तस्मादात्मनो यत्कारणरूपं कारणावस्था कारणतापत्तिः स विज्ञानघनं नामेत्यर्थः । तस्मात्तडिदाभमात्रमिति प्रतीकं तस्य व्याख्यानं दीपवत्प्रकाश इति । ब्रह्मण्य इति मन्त्रे पादद्वयं पूरयति ब्रह्मण्य इत्यादिना । सर्वेत्यादि ब्रह्मेत्यन्तं प्रतीकं तस्य व्याख्यानं शोकेत्यादि ध्यायन्न सीदतीत्यध्याहारेण व्याख्या । एकमित्युक्तं एकत्वस्याभयहेतुतामाह द्वैतादिति । द्वैतापेक्षया अद्वैतमैक्यमभयं भवति । नानादर्शने शातपथं वाक्यं बाधकमाह मृत्योरिति । ननु हृत्स्थमात्मरूपं कथमनुभूयतेऽत आह हृत्पद्ममध्य इत्यादि । सर्वं तदुक्तगुणमात्मरूपं प्रज्ञानेत्रं प्रज्ञैव नेत्रं दर्शनोपायो यस्य । प्रज्ञारूपे नेत्रे च प्रतिष्ठितं तदेकप्रमाणं "मनसैवानुद्रष्टव्यमि"ति श्रुतेः ( बृह. ४. ४. १९ ) । किञ्च बाह्यदर्शनमपि प्रज्ञयैवेत्याह प्रज्ञानेत्रो लोक इति । चक्षुरादीनि तु भौतिकत्वाज्जडान्यत एव प्रज्ञैव प्रतिष्ठा सर्वस्याश्रयः । तच्च प्रज्ञानं ब्रह्म "नान्योऽतोस्ति द्रष्टे"ति श्रुतेः ( बृह. ३. ७. २३ ) । उत्क्रमोऽपि प्रज्ञाने विलीय प्रज्ञानादेव देशान्तर

---

1. °रूपमेकाकारं BD.

सर्वान् कामानाप्त्वामृतः समभवत्समभवत् । यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितं तस्मिन्मां धेहि पवमानामृते लोकेऽक्षितेऽमृते लोकेऽक्षिते । अमृतत्वं च गच्छत्यमृतत्वं च गच्छत्यमृतत्वं च गच्छत्यों नमः ।[1] आत्मप्रबोधोपनिषदं मुहूर्त्तमुपासित्वा न स पुनरावर्त्तते न स पुनरावर्त्तते ॥

[2]इत्यात्मबोधोपनिषत्समाप्ता ॥

---

आविर्भावो न मूर्त्तस्येव गतिरस्तीत्याह स एतेनेति । अमृतो मुक्तः । हरिं ध्यायतो भोगापवर्गसिद्धिरित्यर्थः । वैकुण्ठलोकप्रार्थनामन्त्रमाह यत्रेति । अजस्रं नित्यम् । स्वः सुखं हितं निहितम् । पवमान हे प्राण । पुनरुक्तिः कात्स्न्र्यद्योतिका । नारायणोपासने मोक्षोऽवश्यंभावीत्याह अमृतत्वं चेति । त्रिरुक्तिस्त्रिसत्या हि देवाः । यद्वा द्विरुक्त्यन्तं प्रतीकं तृतीयोक्तिर्व्याख्यानम् । ॐ नम इति मन्त्रप्रतीकमष्टाक्षरोपासक इत्यर्थः । अध्ययने फलमात्मेति ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानामात्मबोधप्रदीपिका ॥

इत्यात्मबोधोपनिषद्दीपिका समाप्ता ॥

---

1. So BD; this clause is not in A, but there is instead a quantity of extraneous matter not recognized by the commentator. 2. इत्यात्मप्रबोध° A.

# नारायणकृतदीपिकासहिता

# गारुडोपनिषत् ।

ॐ[1] ब्रह्मविद्यां प्रवक्ष्यामि । ब्रह्मा नारदाय नारदो

---

गारुडोपनिषद्ब्रह्मप्रोक्ता खण्डत्रयान्विता ।
चतुश्चत्वारिंशत्तमा ग्रन्थसंख्याधुनोच्यते ॥

ओम् । अस्य गारुडोपनिषन्महामन्त्रस्य ब्रह्मा ऋषिरमृता गायत्री छन्दः श्रीमहाविष्णुः श्रीगरुडात्मा देवता । हलो बीजानि स्वराः शक्तयः । यद्वा गं बीजं रुं शक्तिः डं कीलकम् । मन्त्रोक्तविषनाशार्थे जपे विनियोगः ॥ ओं खगोत्तमाय विद्महे वैनतेयाय धीमहि । तन्नस्तार्क्ष्यः प्रचोदयात् ॥ अथ न्यासः । ओं गरुडात्मनेऽङ्गुष्ठाभ्यां नमः । ओं वैनतेयाय तर्जनीभ्यां नमः । ओं महातार्क्ष्याय मध्यमाभ्यां नमः । ओं खगोत्तमायानामिकाभ्यां नमः । ओं छन्दोमयाय कनिष्ठिकाभ्यां नमः । ओं नागालङ्कृतशरीराय करतलकरपृष्ठाभ्यां नमः । ओं गरुडात्मने हृदयाय नमः । ओं वैनतेयाय शिरसे स्वाहा । ओं महातार्क्ष्याय शिखायै वषट्[१] । ओं खगोत्तमाय कवचाय हुम्[२] । ओं छन्दोमयाय नेत्रत्रयाय वौषट्[३] । ओं नागालङ्कृतशरीरायास्त्राय फट्[४] ॥ अथ ध्यानम् ।

"हेमाद्रिशिखराकारं पूर्णचन्द्रनिभाननम् ।
दीर्घबाहुं वृषस्कन्धं नागाभरणभूषितम् ।
सुपक्षपादयुगलनासाचञ्चुविराजितम् ॥
अनन्तो वामकटके[५] यज्ञसूत्रं तु वासुकिः ।
तक्षकः कटिसूत्रं तु हारः कर्कोट उच्यते ॥

---

1. All the MSS. but K begin here. See Preface.

---

१. वषट् L. २. हुम् L. ३. वौषट् L. ४. फट् L. ५. So K; but वामकटयो JL.

बृहत्सेनाय बृहत्सेन इन्द्रायेन्द्रो भारद्वाजाय भारद्वाजो जीवितुकामेभ्यः शिष्येभ्यः प्रायच्छत् ॥ १ ॥

ॐ [1]तत्कारीं मत्कारीं विषहारिणीं विष[2]दूषिणीं विष-

पद्मस्तु दक्षिणे कर्णे महापद्मस्तु वामतः ।
शङ्खपालः शिरोदेशे कुलिकस्तु भुजान्तरे ॥
एवं ध्यायेत्रिसन्ध्यादावात्मानं गरुडरूपिणम् ।
विषं नाशयति क्षिप्रं वायुः शीघ्रमिवाम्बुदम् ॥
सूर्यमण्डलसङ्काशं सोममण्डलमध्यगम् ।
पृथिवीमण्डलमुद्रायां बद्धो हुं फट् स्वाहा ॥
आजानुकाञ्चनवर्णाभमानाभेस्तुहिनप्रभम् ।
आकण्ठाच्छुकतुण्डाभमामूर्ध्नोऽञ्जनसन्निभम् ॥

यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो
यं सञ्चिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति ।
चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
वन्दे छन्दोमयं तं खगपतिममलं स्वर्णवर्णं सुपर्णम्" ॥

ओं नमो भगवते गरुडाय श्रीविष्णुवरवाहनाय त्रैलोक्यपरिपूजिताय वज्रनखतुण्डाय वज्रपक्षालङ्कृतशरीराय । आवेशय आवेशय एह्येहि महागरुड दुष्टविषं छिन्धि छिन्धि । आवेशय आवेशय एह्येहि महागरुड दुष्टनागांश्छिन्धि छिन्धि । आवेशय आवेशय एह्येहि महागरुड दुष्टराक्षसांश्छिन्धि छिन्धि । आवेशय आवेशय एह्येहि महागरुड बद्धो हुं फट् स्वाहा । एवमधिकारसम्पत्त्यर्थं देवतारूपमात्मानं सम्पादयेत् ॥ ओं ब्रह्मविद्यामित्यादि ततः पठनीयमुपनिषत्स्वरूपमित्याहुः । ब्रह्मविद्यां ब्रह्मणा पद्मयोनिना प्रवर्त्तितां विद्याम् । ब्रह्मनारदबृहत्सेनबृहस्पतीन्द्रभारद्वाजा वंश्याः ॥ १ ॥

तत्कारीमत्कारीविषहारिणीविषदूषिणीविषसर्पिणीविषनाशिनी-

---

1. तत्कारीं मत्कारीं FJ., and Nâr. as variant. Weber reads तत्कारीं सत्कारीं. 2. विषरूपिणीं all but Dîpikâ and Weber.

सर्पिणीं विषनाशिनीम् । हतं विषं नष्टं विषं प्रनष्टं विषं हतमिन्द्रस्य वज्रेण स्वाहा । नागानां सर्पाणां वृश्चिकानां लूतानां प्रलूतानां गोधानां गृहगोधानां मूषकाणाम् । यद्यनन्तकदूतस्त्वं यदि वानन्तकः स्वयम्[1] । यदि वासुकिदूतस्त्वं यदि वा वासुकिः स्वयम् । यदि तक्षकदूतस्त्वं यदि वा तक्षकः स्वयम् । यदि कर्कोटकदूतस्त्वं यदि वा कर्कोटकः स्वयम् । यदि शङ्खपुलिकदूतस्त्वं यदि वा शङ्खपुलिकः स्वयम् । यदि पद्मकदूतस्त्वं यदि वा पद्मकः स्वयम् । यदि महापद्मकदूतस्त्वं यदि वा महापद्मकः स्वयम् । यद्येलापत्रकदूतस्त्वं यदि वैलापत्रकः स्वयम् । यदि महैलापत्रकदूतस्त्वं यदि वा महैलापत्रकः

---

संज्ञकाः पण्महौषधीश्च प्रायच्छत् । तर्कार्ही[१] मर्कार्हीमिति केचित्पठन्ति तत्कारीं मत्कारीमित्यपरे । हतं विषमित्यारभ्य स्वाहान्तं मन्त्रं च प्रायच्छत् । अयं मन्त्रो यद्यनन्तकदूतस्त्वमित्यादिषु नवसु पर्यायेषु प्रत्येकं प्रयोक्तव्य इत्याम्नायः । ब्रह्मणा ब्रह्मवाक्येन स्वाहान्तोऽवान्तरमन्त्रः । महामन्त्रस्तु तत्कारीमित्यारभ्य यदि वा महैलापत्रकः स्वयमित्यन्तो द्वितीयखण्डरूपः । नागानां कद्रूपुत्राणां विषं हतमित्यन्वयः । सर्पाणां सुरसापुत्राणाम् । तदुक्तं हरिवंशे[२] ( अध्यायः ३ ) ।

"सुरसायाः सहस्रं तु सर्पाणाममितौजसाम् ।
अनेकशिरसां तात खेचराणां महात्मनाम् ।
काद्रवेयास्तु[३] बलिनः सहस्रममितौजसः ।
सुपर्णवशगा नागा जज्ञिरेऽनेकमस्तकाः ।

---

1. सञ्चरति सञ्चरति Weber.

---

१. तर्का° &c. L. २. In Calcutta edition, lines 225-231. See also Âdiparva LXV, for the chief sons of Kadrû. ३. °श्च in *Harivams'a*.

स्वयम् । [यदि[1] कालिकदूतस्त्वं यदि वा कालिकः स्व-

तेषां प्रधानाः सततं शेषवासुकितक्षकाः ।
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ ।
एलापत्रश्च शङ्खश्च कर्कोटकधनञ्जयौ ।
महानीलमहाकर्णौ धृतराष्ट्रबलाहकौ ।
कुहरः पुष्पदन्तश्च दुर्मुखः सुमुखस्तथा[1] ।
नहुषः शङ्खरोमा च मणिरित्येवमादयः ।
तेषां पुत्राश्च पौत्राश्च गरुडेन निपातिताः ।
चतुर्दशसहस्राणि क्रूराणां पन्नगाशिने[2]"ति ॥

वृश्चिका विषपुच्छाः । लूता[3] कीटविशेषो लालातन्तुकर्त्ता । ततो हीनः प्रलूता[4] । गोधा द्विविधा गृहगोधा भूमिगोधा च । आद्या पल्ली । अन्त्या सापि द्विविधा विशालपृष्ठा चाविशालपृष्ठा च । आद्या ग्राम्यान्या वन्या । गोधाग्रहणं कृकलासादीनामप्युपलक्षणम् । मूषका उन्दराः । एषामष्टानां विषं हतमित्यन्वयः । स्थावराणां धत्तूरार्कादीनाम् । जङ्गमानां पठितव्यतिरिक्तानाम् । अनन्तकवासुकितक्षककर्कोटकपद्मकमहापद्मकशङ्खपुलिकैलापत्रकमहैलापत्रकाणां नवानां यदि दूतोऽसि यदि वा स्वयं तदन्यतमोऽसि तथापि तव विषं हतमित्यन्वयः । शङ्खपुलिकः शङ्खपालकः । स पाठे सप्तमो ज्ञेयो गरुडध्याने तथा पाठाद्ग्रहप्रत्यधिदेवतापाठेऽपि तस्य सप्तमत्वाच्च । तथा हि ।

"अनन्तं भास्करं विद्यात्सोमराजोऽथ वासुकिः ।
तक्षकं लोहितं विद्याद्बुधं कर्कोटकं तथा ।

1. Nârâyaṇa limits the snake-chiefs to nine and excludes these. He admits, however, that some include them, and they are in all the MSS of the text.

१. *Harivams'a* has as the next line शंखश्च शंखपालश्च कपिलो वामनस्तथा । २. उरगाशिनम् । *Harivams'a* (Calc.), but wrongly. ३. भूता (!) JL. ४. प्रभूता (!) JL.

यम् । यदि कुलिकदूतस्त्वं यदि वा कुलिकः स्वयम् । यदि कम्बलाश्वतरदूतस्त्वं यदि वा कम्बलाश्वतरः स्वयम्] ॥ २ ॥

य इमां महाविद्याममावास्यायां शृणुयाद्द्वादशवर्षं न तं दशन्ति सर्पाः । य इमां महाविद्याममावास्यायामधीयानो धारयेद्यावज्जीवं न तं दशन्ति सर्पाः । अष्टौ ब्राह्मणान् ग्राहयित्वा तृणेन मोक्षयति काष्ठेन मोक्षयति भस्मना मोक्षयति । शतं ब्राह्मणान् ग्राहयित्वा चक्षुषा मोक्षयति । सहस्रं ब्राह्मणान् ग्राहयित्वा मनसा मोक्षयति मनसा मोक्षयतीत्याह भगवान् ब्रह्मा आह भग-

विद्याद्बृहस्पतिं पद्मं महापद्मं तु भार्गवम् ।
शङ्खपालं शनिं विद्याद्राहुं कम्बलकं तथा ।
केतुश्च पुलिकं विद्यादिति प्रत्यधिदेवता" इति ॥

पञ्चमस्थाने तु प्रमादपाठः स्मार्त्तक्रमेण श्रुतेरपि तथाक्रमानुमानात्पाठानिश्चयात् । नव कुलानि लोकप्रसिद्धानि । क्वचित्कम्बलाश्वतरकालिककुलिकानां त्रयः पर्याया अधिकाः पठ्यन्ते ते[1] न सर्वशिष्टसंमताः[2] । कम्बलाश्वतरो भ्रात्रोर्गण एकत्वेन विवक्षितः ॥ २ ॥

अमावास्यायामिति । विधिबलादनध्यायदोषो न प्रवर्त्तते । धारयेद्भूर्जादिषु लिखित्वा कण्ठादौ बध्नीयात् । ग्राहयित्वा दत्त्वा । तेनैषा[3] शिष्येभ्यो हितायावश्यं देयेत्युपदेशः । तृणेन तृणस्पर्शेन । एवं काष्ठेन भस्मना चापि स्पृष्टेन । चक्षुषा दर्शनमात्रेण । मनसा चिन्तामात्रेण । द्विरुक्तिरावश्यकत्वार्था । आह उक्तवान् भगवान् षड्विधैश्वर्यसम्पन्नो ब्रह्मा प्रजापतिर्यन्नाम्नेयं ब्रह्मविद्या । द्विरुक्तिः समा-

१. तो न for ऽन्तो न (?) L. In the reading ते न, ते=पर्यायाः (?)
२. This reading is conjectural, J has °संमता and L °समंता.
३. तेनैवा° J.

वान् ब्रह्मेति गारुडोपनिषत् ॥ ३ ॥

इत्यथर्ववेदे गारुडोपनिषत्समाप्ता ॥ ४४ ॥

---

त्यर्था । इति गारुडोपनिषत् । गरुद्भ्यां डयत आकाशे गच्छति गरुडस्तद्देवताका उपनिषदिति समाप्ता ॥ ३ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां गारुडे दीपिका स्मृता ॥

इत्यथर्ववेदे गारुडोपनिषद्दीपिका समाप्ता ॥ ४४ ॥

# नारायणकृतदीपिकासहिता

# महोपनिषत् ।

अथातो महोपनिषदमेव । तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा न ईशानो नापो नाग्नीषोमौ नेमे

---

नारायणः सर्वमहांस्तद्विद्यापि तथोच्यते ।
चतुःखण्डा च नवमी श्रीमहोपनिषत्स्मृता ॥

एक एव नारायणो देवस्तत्कार्यं च सर्वं तद्रूपमेव । स एव चाद्वितीयः । स च तत्परायणैर्योगिभिर्हृत्पुण्डरीके ध्येय इति वक्तुं महोपनिषदारभ्यतेऽथेति । तदुक्तं याज्ञवल्क्येन ।

"अथवा परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशाद्विज्ञाय पुरुषं कृष्णपिङ्गलम् ॥
ब्रह्म ब्रह्मपुरे चास्मिन्दहराख्यस्य मध्यमे ।
अभ्यासात्सम्प्रपश्यन्ति सन्तः संसारभेषजमि"ति ॥

अथातो महोपनिषदमेव व्याख्यास्याम इति शेषः । तदाहुः पुराविदः । ह ऐतिह्ये वै प्रसिद्धौ । नारासु अयनं यस्य स नारायणः । तदुक्तं ( मनुस्मृतौ १. १० ) ।

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
तासु तस्यायनं यस्मात्तेन नारायणः स्मृत" इति ॥

इह तु भाविसंज्ञाया व्यपदेशस्तस्मिन् काले नाप इत्यपां निषेधात् । रूढिर्वैषा तत्रभवतः । यद्वा नर आत्मनो जातान्याकाशादीनि नाराणि तानि कार्याण्ययनं कार्यात्मना व्याप्नोत्यतश्च तान्यस्यायनमिति नारायणः ।

"यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ॥

इति मन्त्रवर्णात् ( महानारायणोप० ११. ६ ) ।

**द्यावापृथिवी न नक्षत्राणि न सूर्यः स एकाकी नर एव। तस्य ध्यानान्तःस्थस्य यन्नःस्तोममुच्यते। तस्मिन् पुरुषाश्चतुर्दशाजायन्त एका कन्या। दशेन्द्रियाणि मन एकादशम्। तेजो द्वादशम्। अहङ्कारस्त्रयोदशः। प्राणाश्चतुर्दश आत्मा। पञ्चदशी बुद्धिः। पञ्चतन्मात्राणि**

---

"नराज्जातानि तत्त्वानि नाराणीति ततो विदुः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः"॥

इति महाभारते[१]। नाराणामयनात्प्रलय इति वा नारायणः। "यत्प्रयन्त्यभिसंविशन्ती"ति श्रुतेः (तैत्तिरीयोप० ३. १. १.)।

"नाराणामयनं यस्मात्तस्मान्नारायणः स्मृतः"॥

इति ब्रह्मवैवर्ते। "नारायणाय नम इत्ययमेव सत्यं" इत्यादि नृसिंहपुराणे च।

"नयतीति नरः प्रोक्तः परमात्मा सनातनः"॥

इति व्यासवचनम्॥ न ईशान इति संहिताया अविवक्षा। नर एव पुरुष एव न तु नारायणत्वं द्वितीयाभावात्। तदा तस्याभूदित्यर्थः। अनेन नरसमूहोऽयनं यस्येत्यपि विग्रहः सूचितः। यन्नःस्तोममिति। नसो नासिकायाः प्राणानामिति यावत्स्तोमः समूहो यस्मिंस्तन्नःस्तोमं मायाकुहरमनिर्वचनीयं सर्वोपादानयोग्यम्। यदुक्तं "नसः स्तोमो देवानृच्छतीति"। उच्यते देवेषु। तस्मिन्नुपादाने सति ते के पुरुषा इत्यत आह चतुर्दशेति। तेजो महान्। प्राणा ये पञ्च वा दश वा ते चतुर्दश आत्मा स्वरूपम्। अथवा आत्मशब्दः पुरुषपर्यायश्चतुर्दशः पुरुषः प्राणाः प्राणसमुदाय इत्यर्थः। चतुर्दशपुरुषान् कन्यां च प्रदर्श्य ततोऽधिकां सृष्टिमाह पञ्चतन्मात्राणीति। पाठक्रमोऽत्र न विवक्षितः। किन्त्वार्थः[२] (?) स

---

1. A very curious reading. S'amkarânanda's is preferable; so too GJ.

---

१. Also *Mahâbhârata* 5.69.10 (नरा°). २. So EL; किस्वार्थः K.

पञ्चमहाभूतानि। स एष पञ्चविंशकः पुरुषः। तं पुरुषं पुरुषो निवेश्य। नास्य प्रजा नसंवत्सरा जायन्ते संवत्सरादधि जायन्ते॥ १॥

इत्यथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्याये[1]त तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रि[2]यं सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजुःसामाथर्वाङ्गिरसः सर्वाणि छन्दांसि ता[3]न्यङ्गेष्वाश्रितानि॥ २॥

---

यथा अव्यक्तान्महत्तत्त्वं ततोऽहङ्कारः। स गुणभेदात्त्रिधा। तत्र सात्त्विकाद्बुद्धिमनश्चित्तानि देवाश्च। राजसादिन्द्रियाणि प्रवृत्तिस्वभावानि। तामसात्तन्मात्राद्वारा पञ्चभूतानि जडानीति। स एष पञ्चविंशक इति। न पञ्चविंशतिसंख्यापूरणः पञ्चविंशको नारायण उच्यते किन्तु पञ्चविंशतेः सङ्घः पञ्चविंशकः। नारायणादन्यः सङ्घोपाधिर्हिरण्यगर्भ उच्यते स हि पञ्चविंशतेरुक्तायाः सङ्घात्मकः। तथा च मन्त्रवर्णः (ऋ० १०. १२१. १)। "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदि"ति। तं पुरुषं सङ्घोपाधिं पुरुषो नारायणो निवेश्य सृष्टावधिकृत्योदासीनस्तस्थाविति शेषः। अस्य हिरण्यगर्भस्य प्रजननाधिकृतस्य न संवत्सरो यासां ता नसंवत्सराः प्रजा न जायन्ते। निषेधार्थनकारेण बहुव्रीहिस्तेन "नलोपो नञ" इति नलोपो भवति (पा० ६. २. ७३)। संवत्सरमनतिक्रम्य प्रजा न जायन्ते किन्तु संवत्सरादधि संवत्सरस्योपरि जायन्ते॥ १॥

इति हेतोः प्रजाविलम्बं ज्ञात्वा अथ पुनरेव स नारायणोऽन्यत्कामोऽन्यकामः। अन्यदित्यव्ययम्। ध्यायेत ध्यानं कृतवानित्यर्थः। त्र्यक्ष इति त्रिनेत्रो रुद्रः। "हरिनाभ्यब्जजो ब्रह्मा ब्रह्मभ्रूमध्यजो

---

1. So ABC, but EFH. अध्यायत. 2. H. reads श्रीं (=शीत्कारं).
3. तान्यङ्गे शाश्वतानि H.

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायेत । तस्य ध्यानान्तःस्थस्य ललाटात् स्वेदोऽपतत् । ता इमाः प्रतता आपस्तासु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखो जायेत[2] । सोऽध्यायत[1] पूर्वामुखो भूत्वा भूरिति व्याहृतिर्गायत्रं छन्द ऋग्वेदः । पश्चिमामुखो भूत्वा भुव इति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदः । उत्तरामुखो भूत्वा स्वरिति व्याहृतिर्जागतं छन्दः सामवेदः । दक्षिणामुखो भूत्वों[3] जनदिति व्याहृत्यानुष्टुभं छन्दोऽथर्ववेदः । ओं सहस्रशीर्षं देवं सहस्राक्षं विश्वशम्भुवम् । विश्वतःपरमं नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषं तं वि-

---

हर" इति पुराणप्रक्रियाविरोधस्तु कल्पभेदेन परिहरणीयः । श्रियं शोभां ऐश्वर्यं बिभ्रत् । तपो धर्मो मनो ज्ञानम् । रुद्रस्याङ्गेषु सप्रणवा व्याहृतय आश्रिता इति लिङ्गविनिमयेन योज्यम् । अथवाश्रितानीत्यत्र "नपुंसकमनपुंसकेन" इति नपुंसकैकशेषः ( पा० १. २. ६९ ) ॥ २ ॥

अथ हिरण्यगर्भरुद्रावुत्पाद्य । ता इमाः प्रसिद्धाः प्रतता ब्रह्माण्डाधारभूता आपः सम्पन्ना अण्डमजायतेत्यन्वयः । तत्राण्डे पद्मस्थानीये चतुर्दिगवलोकनाच्चतुर्मुखो जायेताजायत जातः । स ब्रह्माध्यायत ध्यातवान् । किं ध्यातमित्यत आह भूरितीति त्रयं ध्यातमिति शेषः । ओं जनदिति ओं जन इति वक्तव्ये छान्दसो वर्णव्यत्ययः सकारस्य दकारः । व्याहृत्या सहानुष्टुबथर्ववेदौ ध्याताविस्यर्थः । ततो ब्रह्मणः सर्वसृष्टिः प्रवृत्ता । एवं स्रष्टारमादिपुरुषं मन्त्रवर्णैः स्तौति ओं सहस्रशीर्षमिति । विश्वशम्भुवं विश्वेषां सुखस्य भूमिम् । विश्वतःपरमं नित्यं विश्वं नारायणं हरिमिति महानारायणीये

---

1. अध्यायत DEFH. 2. So ABC; जायते D. 3. भूत्वा जन इति H.

श्वमुपजीवति। ऋषिं विश्वेश्वरं देवं समुद्रेतं[1] विश्वरूपिणम्। पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम्। हृदये चाप्यधोमुखं सन्तते[2] शीकराभिश्च[3]। तस्य मध्ये म-

दर्शनादत्रापि स एव पाठो युक्तः। विश्वमिति पदं तेन तृतीयचतुर्थपादाभ्यां वा सम्बध्यते तेन छन्दोभङ्गो न भवति। विश्वमेवेदं पुरुषमितीदं विश्वं पुरुषमेव विद्धीत्यन्वयः। ऋषिं द्रष्टारम्। समुद्रेतं समुद्रमितं प्राप्तं क्षीराब्धिशायिनम्। अथवा समुद्रेतं समुद्रेतसं पृषोदरादि (पा० ६. ३. १०९) एतद्रूपं योगेन प्रत्यक्षं भवति नानावताराणां मूलं च। तदुक्तं (भागवते १. ३. ४, ५)।

"पश्यन्त्यदोरूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्॥
एतन्नानावताराणां निधानं बीजमव्ययम्।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादय" इति॥

इदमेव भगवतार्जुनाय दर्शितं विश्वरूपम्। नारायणीयायाः सर्वदेवमयत्वेनेदमेव स्तुतम्। योगार्थमिदानीं ध्यानस्थानमाह पद्मेत्यादि। पद्मकोशप्रतीकाशं स्थानं कोशसन्निभं कोशः कदलीपुष्पमुकुलं तत्तुल्यम्। अधोमुखत्वद्योतनाय द्वितीयमुपमानं तादृशं हृदये आलम्बति आलम्बते। "छन्दसि परेऽपि" इत्याङः परप्रयोगः (पा० १. ४. ८१)। सन्तते शीकराभिश्च हृदये चाप्यधोमुखमिति वक्तव्ये पादव्यत्ययश्छान्दसः पाठकप्रमादो वा। कथंभूते हृदये शीकराभिरम्बुकणवतीभिर्नाडीभिः सन्तते व्याप्ते।

"शीकरं सन्तते वातसृताम्बुकणयोर्विदुः"।

इति विश्वः। शीकराणि प्राणाहृतजलबिन्दवः सन्त्यासु ताः शीकराः। शतं चैका च हृदयस्य नाड्यस्ताभिर्व्याप्ते। तस्य दहराख्यस्य मध्ये। महान्महदित्यर्थः। विश्वार्चिर्विश्वदीपकम्। विश्वतोमुखं सर्वव्यापि। एवं निर्गुणध्यानमुक्त्वा सगुणध्यानाय पीठरचनामाह

1. समुद्रे कं GHJ. 2. सन्तत्यै DFGHJ. 3. शीत्क° HJ.

हानर्चिर्विश्वार्चिर्विश्वतोमुखम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । तस्यै शिखायै मध्ये पुरुषः परमात्मा व्यवस्थितः । स ब्रह्मा स ईशानः सोऽक्षरः परमः स्वराट् ॥ ३ ॥

य इदं[1] महोपनिषदं ब्राह्मणोऽधीतेऽश्रोत्रियः श्रोत्रियो भवत्यनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति ।

---

तस्येति । वह्निशिखेत्यस्यानन्तरं सार्कचन्द्रेति द्रष्टव्यं पीठे सूर्यचन्द्राग्नीनां क्रमेण पूजाया उक्तत्वात् । उक्तं च ध्यानबिन्दौ (१५) ।

"तत्रार्कचन्द्रवह्नीनामुपर्युपरि चिन्तयेदि" ति ।

छन्दःसामञ्जस्याच्चान्यथा छन्दोभङ्गः स्यात् । तस्यै तस्याः । पुरुषो नारायणाख्यः ॥ ३ ॥

इदं महोपनिषदमित्युक्तेरकारान्तो नपुंसकमुपनिषद्शब्दोऽस्तीति गम्यते । ब्राह्मण इत्युक्तेरन्येषां न मुख्योऽधिकार इति गम्यते । अग्निपूत इत्यग्नौ प्रसन्ने यथा पूतो भवति तद्वत् । सत्यपूत इति यथा नित्यं सत्यवादी पूतो भवति तद्वत् । सर्वपूत इति सर्वैः पवित्रीकरणैर्यथा पूतो भवति तद्वत् । वेदैरिति वेदानां मूर्तिमत्त्वात् ।

---

1. इमां J.

आचक्षुषः पङ्क्तिं पुनात्यासप्तमात्पुरुषयुगात्पुनातीत्याह भगवान् हिरण्यगर्भः । जाप्येनामृतत्वं गच्छत्यमृतत्वं गच्छतीति ॥ ४ ॥

इत्यथर्ववेदे महोपनिषत्समाप्ता ॥ ९ ॥

---

आचक्षुष इति यावत्पश्यति तावत्स्थानं पङ्क्तिं पुनाति । पुरुषयुगादिति मातृतः पितृतश्चेति सप्तमात्पुरुषादारभ्यार्वाग्यावन्तस्तान्नरकादुद्धरति । हिरण्यगर्भः प्रथमजः । आवृत्तिः फलाविसंवादाय । इतिशब्दः समाप्त्यर्थः । यद्यपि "शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । अन्तरं नैव पश्यामि केशवस्य शिवस्य च" इत्यादिस्मृतेः प्रत्येकमेकत्वप्रतिपादकश्रुतेश्च हरिहरयोरुपासने फलतोऽर्थतश्च न भेदस्तथापि शिवशरण्याप्रवृत्तानामथर्वशिरआद्युक्तं ध्यानं केशवशरण्याप्रवृत्तानां महोपनिषदाद्युक्तमिति विवेकः ॥ ४ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां महोपनिषद्दीपिका ॥

इति महोपनिषद्दीपिका समाप्ता ॥

---

१. I cannot trace this, but see Notes. The first line is quoted in *Skanda-upanishad*.

## शङ्करानन्दविरचिता

# महोपनिषद्दीपिका ।

---

महोपनिषदं ब्रह्मस्वात्मैक्यार्थावबोधिनीम् ।
व्याख्यास्ये दुःखजलधेर्नावमानन्दपारगाम् ॥ १ ॥

**अथ** नित्यानित्यवस्तुविवेकशमदमादिसाधनसम्पन्नमुमुक्षुत्वलोकद्वयफलविरागानन्तरम् । **अतो** यस्मात् सत्यामपि साधनसम्पत्तौ न ब्रह्मज्ञानमन्तरेण पुरुषार्थावाप्तिरस्माद्धेतोः । **महोपनिषदमेव** महती चासावर्थत उपनिषच्च जीवब्रह्मणोस्तादात्म्यलक्षणसामीप्येनैक्यं गमयित्वा नितरामहम्ममादिग्रन्थीन् शिथिलीकृत्याविद्यां सकार्यसंस्कारां सादयति विनाशयतीत्युपनिषत् । तामेव न त्वन्यां व्याख्यास्याम इति शेषः । अस्मिन्नर्थे महोपनिषद्रूपे महतां सम्मतिमाह **तत्** तस्मिन् जगत्कारणे महति सर्वात्मनि ब्रह्मविद्याविषये **आहुः** कथयन्ति पूर्वे महान्तस्तद्वचनमाहुः । **एको** देशकालवस्तुपरिच्छेदशून्यः । ह किल । **वै** प्रसिद्धः । **नारायणः** आपो नारास्ता अयनं यस्य स नारायणः । अथवा आरा दुःखकारणानि न आरा नारा ब्रह्मचर्यादीनि साधनानि उदर्कसुखानि तान्येव अयनं प्राप्तिसाधनानि यस्य स नारायणः । अथवा अराः संसारचक्रस्य कामक्रोधादयस्तेषां अयनं अविद्या येषां जीवानां ते अरायणा आत्मबोधशून्यास्तद्विपरीत आनन्दात्मा नारायणः । अथवा नरनारायणावतारो नारायणो मुनिर्निवृत्तिमार्गनिरतानां परमो गुरुः । **आसीत्** जगदुत्पत्तेः प्राग्बभूव । ननु यथा नारायणस्तद्वद्ब्रह्मादयोऽप्यासन्नित्यत आह **न ब्रह्मा** चतुराननो नासीत् । **न ईशानः** पिनाकपाणिः पार्वतीपतिर्नासीत् । **नाप** उदकानि जगदारम्भकाणि नासन् । **नाग्नीषोमौ** अग्निश्च सोमश्चाग्नीषोमौ नास्ताम् । **नेमे** साक्षिप्रत्यक्षे **द्यावापृथिवी** ब्रह्माण्डस्योपर्यधोभागकपाले नास्ताम् । न **नक्ष**-

**त्राणि** तारकरूपाणि नासन् । **न सूर्यः** जगत्प्राणः सविता शोभनाया गतेः कर्त्ता नासीत् । नारायण आसीदित्यत्र तिङ्क्रियापदं न ब्रह्मेत्यादिनकारैः समं यथावचनमनुषक्तमवगन्तव्यम् । **स** नारायणः । **एकाकी** द्वितीयवस्तुशून्यः । **नरमेव** (?) न रेम एव रतिं न कृतवानेव अरतिं प्राप्तश्च ध्यानं चकार । **तस्य** नारायणस्य रतिशून्यस्य **ध्यानान्तःस्थस्य** चिन्तासन्ततेर्मध्ये वर्त्तमानस्य । **यज्ञस्तोमं** ज्योतिष्टोमादियज्ञसमूहं तत्प्रतिपादकं वेदराशिमित्यर्थः । इष्टवतस्तदनन्तरमिदं वक्ष्यमाणं सृष्टिजातं अभूदिति शेषः । **उच्यते** कथ्यते विद्वद्भिः । **तस्मिन्** नारायणे यज्ञसमूहबोधवति स्थिते । **पुरुषाः** पुरि शरीरे शयाः । **चतुर्दश** दशेन्द्रियाणि बुद्धिरहितमन्तःकरणं त्रिभेदं सप्राणं चेति चतुर्दश । **आजायन्ते** उत्पद्यन्त इत्यर्थः । इदानीं चतुर्दशैव जाता इति बुद्धिं वारयितुमाह **एका** एकत्वसंख्याका **कन्या** अक्षता सुखकारिणीव बुद्धिः । **दश** चक्षुःश्रोत्रघ्राणरसनत्वग्वाक्पाणिपादपायूपस्थाख्यानि **इन्द्रियाणि** ज्ञानकर्माख्यानि इन्द्रस्य परमात्मनो लिङ्गानि । **मनः** सङ्कल्पविकल्पात्मकं **एकादशं** एकादशसंख्यापूरकम् । **तेजो** जठरजातवेदोरूपं चित्तं वा तेजस्वि **द्वादशं** द्वादशसंख्यापूरकम् । **अहङ्कारो** मनुष्योऽहमित्यादिबुद्धेर्विषयः **त्रयोदशः** त्रयोदशसंख्यापूरकः । **प्राणः** पञ्चवृत्तिभेदभिन्नः **चतुर्दशः** चतुर्दशसंख्यापूरकः । **आत्मा** पूर्वोक्ता कन्या **पञ्चदशः** पञ्चदशसंख्यापूरणी । भूतानि दशप्रकाराणि स्थूलसूक्ष्मभेदेन । सूक्ष्माण्याह **पञ्चतन्मात्राणि** पञ्चसंख्याकान्यशेषविशेषशून्यानि । शब्दस्पर्शरूपरसगन्धरूपाणि पञ्चतन्मात्रशब्देनोच्यन्ते । **पञ्च** पञ्चसंख्याकानि **महाभूतानि** स्थूलानि । पृथ्व्यप्तेजोवाय्वाकाशरूपाणि पञ्चमहाभूतानि । **स** नारायण **एकः** अशेषभेदशून्यः **पञ्चविंशतिः** पञ्चविंशतिप्रकारः **पुरुषः** परिपूर्णः । **तत्पुरुषः** तत्तसात्पुरुषः पुरुषशब्दाभिधेयः **पुरुषः** परिपूर्णस्तत्त्वान्तरस्याभावात् । सर्वरूपेण स्वयमवस्थित इत्यर्थः । **अस्य** नारायणस्य पञ्चविंशत्यात्मकस्य **प्रधान-**

**संवत्सराः** अब्दा मनुष्यसंवत्सरा इत्यर्थः । प्रधानशब्दोऽव्याकृतं तदात्मका वा संवत्सराः प्रधानसंवत्सराः । लवादिद्विपरार्द्धावसानः काल इत्यर्थः । **जायन्ते** तस्मादुत्पद्यन्ते तदात्मका एव तत उत्पद्यन्त इत्यर्थः । **संवत्सरात्** परमेश्वरात्मकात्कालादुत्पन्नात् । **अधि** अनन्तरमाधिक्येन विशेषरूपेण **जायन्ते** कन्यादय उत्पद्यन्ते न तु पूर्वमित्यर्थः । **इति** अनेन प्रकारेणाहुरित्यनेन सम्बन्धः ॥ १ ॥

इदानीं श्रुतिराह **अथ** पञ्चविंशतितत्त्वोत्पत्त्यन्तरं **पुनरेव** भूय एव । **नारायणः** व्याख्यातम् । **स** उक्तः । एवकारस्यात्र सम्बन्धः पञ्चविंशतितत्त्वात्मक एव । **अन्यत्कामः** अन्यकामोऽन्यस्मिन् स्वशरीरव्यतिरिक्ते शरीरान्तरे कामो यस्य सोऽन्यत्कामः । **मनसा** अन्तःकरणेन । **अध्यायत** अध्यायत्कामनामकुरुतेत्यर्थः । **तस्य ध्यानान्तःस्थस्य** व्याख्यातम् । **ललाटात्** ध्यायतो भगवतो नारायणस्य ललाटफलकात् । **त्र्यक्षशूलपाणिपुरुषः** । त्रीणि सूर्यसोमाग्न्यात्मकान्यक्षीणि यस्य स त्र्यक्षः । शूलं संसारशूलनिवारणं पाणौ यस्य स शूलपाणिः । पुरुषः पुरिशयोऽपि परिपूर्णः । त्र्यक्षश्चासौ शूलपाणिश्चेति त्र्यक्षशूलपाणिः । त्र्यक्षशूलपाणिश्चासौ पुरुषश्चेति त्र्यक्षशूलपाणिपुरुषः । **अजायत** उदपद्यत । **बिभ्रत् श्रीं** शित्कारं **सत्यं** प्रियं हितं प्रमाणदृष्टं वचनं एतद्द्वयं मुखेन । **ब्रह्मचर्यं** योषितां स्मरणकीर्त्तनकेलिप्रेक्षणगुह्यभाषणसङ्कल्पाध्यवसायक्रियानिष्पत्तीनां वर्जनं मनआदिभिः । **तपः** शरीरशोषणं शरीरेण । पर्यालोचनं वा मनसा । **वैराग्यं** सर्वविषयवैतृष्ण्यं मनसा । **मनः** स्वाधीनमन्तःकरणं हृदयकमलेन । **ऐश्वर्यं** विविधां विभूतिं वाक्कायमनःप्रभृतिभिः । **सप्रणवा व्याहृतयः** सप्रणवव्याहृतीरोङ्कारसहिता भूराद्यास्तिस्रश्चतस्रः सप्त वा । **ऋग्यजुःसामाथर्वाङ्गिरसः** चतुरो वेदान् । **सर्वाणि छन्दांसि** निखिलानि गायत्र्यादीनि छन्दःशब्दाभिधेयानि प्रणवादीनि छन्दोन्तानि मुखेन । **तानि** श्रीमित्यादिनोक्तान्यनुक्तानि च । **अङ्गे** मुखादिके शरीरावयवे

यथायोग्यम् । **शाश्वतानि** शश्वद्भावानि सर्वदा अनपायानीत्यर्थः ॥ २ ॥

अथ रुद्रोत्पत्त्यनन्तरं **पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तःस्थस्य ललाटात्** व्याख्यातम् । **स्वेदः** श्रमजो बिन्दुः । **अपतत्** भूमौ पतनमकरोत् । **ताः** प्रसिद्धा **इमाः** प्रतिप्राणिप्रत्यक्षाः **प्रतताः** प्रतततमाः प्रकर्षेण विस्तृततमा **आपः** प्रसिद्धान्युदकानि सर्वजगदुपजीव्यानि ब्रह्माण्डगोलकयोनिभूतानि । **तासु तेजः** उक्तास्वप्सु तेजःप्रधानानि पञ्चमहाभूतानि स्ववीर्यरूपाणि स्वसामर्थ्येनैकीकृत्य **हिरण्मयं** सौवर्णं **अण्डं** ब्रह्माण्डं उत्पादितवानिति शेषः । **तत्र** तस्मिन् ब्रह्माण्डे कुक्कुटाण्डस्येवान्तः कुक्कुटो **ब्रह्मा** अण्डस्यान्तर्बृहच्छरीरेन्द्रियो जगद्विधाता **चतुर्मुखः** चतुराननः **अजायत** उदपद्यत । **सः** चतुराननो ब्रह्मा **अध्यायत** अध्यायद्ध्यानमकुरुत । व्याहृत्यादीन् स्रक्ष्य इति शेषः । **पूर्वामुखः** पूर्वस्यां दिशि मुखं यस्य स पूर्वामुखः । **भूत्वा** स्थित्वा पूर्वेण मुखेनेत्यर्थः । इदमसृजतेति शेषः । सृज्यमाह **भूरिति व्याहृतिर्गायत्रं छन्द ऋग्वेदः** । गायत्रं चतुर्विंशत्यक्षरं स्पष्टमन्यत् । **पश्चिमामुखो भूत्वा भुव इति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदः । उत्तरामुखो भूत्वा स्वरिति व्याहृतिर्जागतं छन्दः सामवेदः । दक्षिणामुखो भूत्वा जन इति व्याहृत्यानुष्टुभं छन्दोऽथर्ववेदः** । त्रैष्टुभं चतुश्चत्वारिंशदक्षरं जागतमष्टाचत्वारिंशदक्षरमानुष्टुभं द्वात्रिंशदक्षरम् । अन्यत्पर्यायत्रयेपि प्रथमपर्यायवद्व्याख्येयम् । चतुर्थपर्यायव्याहृत्यभिधानावसरेण बोधिता यद्यपि मह इति चतुर्थी व्याहृतिर्वक्तव्या तथापि भूर्भुवःसुवरिति व्याहृतिभ्यो व्यतिरिक्तानां सर्वासां व्याहृतीनां चतुर्थपर्याये उत्पादं दर्शयितुं जन इत्यभिधानावसरे कृतम् । व्याहृत्यानुष्टुभमिति छान्दसम् । एवं परमेश्वरान्नारायणाद्विश्वसृष्टिमभिधायेदानीं नारायणस्य विश्वरूपतामाह **सहस्रशीर्षं** अन-

न्तमस्तकं **देवं** स्वयंप्रकाशं **सहस्राक्षं** अनन्तनेत्रं **विश्व-शम्भुवं** विश्वस्य शं सुखरूपं भुवनं यस्य स विश्वशम्भुवस्तं **विश्वतः** विश्वस्मात् **परमं** उत्कृष्टं **नित्यं** शाश्वतं **विश्वं** सर्वं **ना-रायणं** उक्तनारायणात्मकं **हरिं** स्मरणेनाशेषं दुःखं सपापं हरतीति हरिस्तम् । विश्वं नारायणमित्येतदुपपादयति **विश्वमेवेदं पुरुषः ।** पुरुषो नारायण एव न त्वन्यः । उक्तेन प्रकारेणेदं भूतभौतिकजातं विश्वं समग्रं **तत्** स्वाभिन्नं स्वसृष्टं **विश्वं** समग्रं पुरुषो भोक्ता **उ-पजीवत्** उपजीवति । उपकार्योऽपि स एवोपकारकोऽपि स एवे-त्यर्थः । **कदं**[१] कं सुखं ददातीति कदस्तम् । **विश्वेश्वरं** विश्वनिय-न्तारम् । **समुद्रे** पयोनिधौ जलशायिरूपेण । अथवा सम्यगुत्कृष्टं दुःखं सकारणं द्रावयति विनाशयतीति समुद्रो ब्रह्मात्मैक्यबोधस्त-स्मिन्नुपलभ्यमान इति शेषः । **कं** सुखमानन्दात्मरूपमित्यर्थः । **वि-श्वरूपिणं** अविद्यया सर्वरूपवन्तं सहस्रशीर्षमित्यादिनोक्तं सगुणं च नारायणं जानीयादिति शेषः । इदानीमस्य नारायणस्योपासन-स्थानमुपलब्धिस्थानं च हृदयपद्मकोशमाह **पद्मकोशप्रतीकाशं** कमलमुकुलसन्निभम् । **लम्बति** लम्बते चित्ते शिलाप्रासादमध्य इव । **आकोशवत्** समन्तात्कमलमुकुलं कृत्रिमदार्वादिमयं स्वा-भाविकं वा तद्वत् । इदं उक्तं **हृदयं** पुण्डरीकं पञ्चछिद्रं जिह्वामूलं गलप्रविष्टनालं हृदयम् । **अधोमुखं**[३] गलप्रदेशापेक्षया अवाङ्मुखम् । **सन्तत्यै** सन्तत्या विस्तृतेरित्यर्थः । **शीत्कराभिश्च** शीत्कार-कारिणीभिरिति शीतलाभिर्मांसास्थ्यादिशिलाभिरित्यर्थः । चशब्दा-द्विचित्ररूपाभिः परिवृतमिति शेषः । **तस्य** हृदयपुण्डरीकस्य **मध्ये** ऽन्तः । **महान्** प्रौढः । **अर्चिः** अर्चिष्मानग्निरित्यर्थः । **विश्वार्चिः** सर्वदीप्तिः **विश्वतोमुखम् । तस्य** शास्त्रैकसमधिगम्यस्याग्नेः **म-ध्ये**ऽन्तः । **वह्निशिखा**[३] **व्यवस्थिता** विशेषेण सूक्ष्मत्वादिरू-

---

१. The MS. has omitted the explanation of ऋषिं. २. चापि has been omitted. ३. The explanation of this word is needed, and अणीयोर्ध्वा should be inserted and explained.

पेणावस्थानं प्राप्ता । **तस्यै शिखायै** तस्याः शिखाया **मध्येऽन्तः पुरुषः** परिपूर्णो नारायणाख्यः **परमात्मा** उत्कृष्ट आनन्दात्मेत्यर्थः । **व्यवस्थितः** विशेषेणोपासकानामनुष्ठानार्थं सर्वतोऽप्यवस्थानं प्राप्तः । इदानीमस्य सार्वात्म्यमाह **स** उक्तो **ब्रह्मा** हिरण्यगर्भादिरूपः । **स** उक्त **ईशानो** विश्वनियन्तोमापतिः । **सेन्द्रः** स उक्त इन्द्रस्त्रिलोकीपतिः । **स** उक्तोऽ**क्षरो**ऽविनाशी व्याप्तश्च । **परम** उत्कृष्टः **स्वराट्** अन्यानपेक्षत्वेन स्वयमेव राजत इति स्वराट् ॥ ३ ॥

सर्वस्मान्मुक्तिर्भवतीत्यर्थस्य स्तुत्यर्थमुपनिषत्पाठजपयोः फलमाह **यः** प्रसिद्धो नियतेन्द्रियः । **इदं महोपनिषदम् । ब्राह्मणो** द्विजोत्तमः । **अधीते** पठति । **अश्रोत्रियो**ऽनधीतवेदः । **श्रोत्रियो भवति** स्पष्टम् । **अनुपनीत** उपनयनसंस्काररहितः । **उपनीतो भवति** स्पष्टम् । **स** महोपनिषत्पाठकः । **अग्निपूतो** भौतिकश्रौतस्मार्ताग्निभिः पूतः पवित्रीकृतोऽग्निपूतः । **भवति** स्पष्टम् । **स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वपूतो भवति ।** वायुसूर्यसोमसत्यवदनसर्वजडाजडपर्यायाः पञ्चापि पूर्ववद्व्याख्येयाः । **स** महोपनिषत्पाठकः । **सर्वैः** निखिलैः । **देवैः** अग्न्यादिभिः । **ज्ञातो** बन्दिजनैरिवावगतः । **भवति** स्पष्टम् । **स सर्वैर्वेदैरनुध्यातो भवति ।** अन्वनु पुनःपुनरयमस्माकं पाठकोऽसदुक्तकारी चेति ध्यातश्चिन्तितोऽनुध्यातः स्पष्टमन्यत् । **स सर्वेषु तीर्थेषु स्नातो भवति** स्पष्टम् । **तेन** महोपनिषत्पाठकेन । **सर्वैः क्रतुभिरिष्टं भवति** स्पष्टम् । तेन **गायत्र्या** गायत्रीमन्त्रस्य **षष्टिसहस्राणि जप्तानि** जपितानि **भवन्ति** स्पष्टम् । तेन **इतिहासपुराणानां** इतिहासा "जनको ह वैदेह" इत्याद्याः पुराणानि "सदेव सोम्येदमग्र आसीदि"त्यादीनि । इतिहासाश्च पुराणानि चेतिहासपुराणानि तेषाम् । **रुद्राणां** नमस्ते रुद्रेत्याद्यध्यायानाम् ।

**शतसहस्राणि जप्तानि भवन्ति** अनेकलक्षाणि जपितानि भवन्ति व्याख्यातम् । **प्रणवानां** ओङ्काराणां **अयुतं** दशसहस्रं **जप्तं** जपितं **भवति** स्पष्टम् । **आचक्षुषः** । आदृष्टिमार्गं यावदवलोकयतीत्यर्थः । **पङ्क्तिं** अपाङ्क्तेयानां पङ्क्तिं पुनाति पवित्रीकरोति । **आसप्तमात्** आत्मानमारभ्य सप्तमपर्यन्तमुपरिष्टादधस्ताच्च **पुरुषयुगात्पुनाति** आपितृपुत्रादिपुरुषयुगात्पुनाति पुत्रादीन्पित्रादींश्च सप्त सप्त पुरुषान् पवित्रीकरोति **इति** अनेन प्रकारेण **आह** उक्तवान् **भगवान्** समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमान् **हिरण्यगर्भः** प्रथमशरीरी सर्वशरीराभिमानी सर्वकार्यकारणात्मा । **जाप्येन** जपेन महोपनिषदः पुनःपुनरावर्त्तनेन तस्या अर्थनिश्चयादुत्पन्नब्रह्मसाक्षात्कारः **अमृतत्वं** अविद्यातत्कार्यतत्संस्कारमरणराहित्यं **गच्छति** प्राप्नोतीत्यानन्दस्वरूपाविर्भावेन **अमृतत्वं गच्छति ।** वाक्याभ्यास उपनिषत्परिसमाप्त्यर्थः । **इति** सर्वोपनिषदामेतावदर्थत्वादिति शेषः ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दपूज्यपाद-
शिष्यस्य शङ्करानन्दभगवतः कृतिर्महोपनिषद्-
दीपिका समाप्ता ॥

---

# नारायणकृतदीपिकासहिता
# वरदपूर्वतापनी ।

**नमो वरदाय विघ्नहर्त्रे ॥ अथातो ब्रह्मोपनिषदं व्याख्यास्यामः ।**

---

वरदोपनिषत्पूर्वतापनीयं त्रिखण्डिका ।
एकपञ्चाशत्तमी सा विज्ञेया ग्रन्थसङ्ग्रहे ॥

पूर्णं ब्रह्म सच्चिदानन्दरूपमेकमेव । तस्य त्रयो गुणावतारा ब्रह्मविष्णुशिवाः । ते त्रयोऽपि मायापरिणामाः प्रातिभासिकाः । तेषामपि त्रयाणां पूर्णावताराः कलावतारा अंशावताराश्च । पूर्णावतारा ब्रह्मणश्चन्द्रादयो विष्णोर्नारसिंहादयः शिवस्यैकादशरुद्रादयः । कलावतारा ब्रह्मणः कश्यपादयो विष्णोर्दत्तादयः शिवस्य बटुकवृषराजादयः । अंशावतारा ब्रह्मणो दक्षादयो विष्णोः पाण्डवेयार्जुनकार्त्तवीर्यार्जुनादयः शिवस्याश्वत्थामविघ्नराजव्यासादयः । अंशत्वं चैषामेकांशेन जीवत्वादेकांशेन च देवत्वात्पुराणादिषूभयथा व्यवहारदर्शनात् । अर्जुनो हि पाण्डुपुत्र इन्द्रांशो नरांशश्च नरो नारायणसहायो बदरिकाश्रमवासी व्यासो हरिहरांशः । अन्ये जीवपरमेश्वरांशा ऐश्वर्यानैश्वर्यदर्शनात् । तत्र भगवान् कारुणिको हरो ब्रह्मांशसहितो नराणां पुरुषार्थचतुष्टयप्रवृत्तानां पूर्वसञ्चितदुरितजन्यकार्यविघातनिरासार्थं विघ्नराजरूपेण स्वयमाविर्बभूव । तस्य[1] रहस्यस्तुतिप्रसाद्यत्वाद्भगवती श्रुती रहस्यमन्त्रैश्चरितैश्चोपस्तौति अथातो ब्रह्मोपनिषदं व्याख्यास्याम इति । अथ शिष्याणामुपासनाधिकारप्राप्त्यनन्तरं अतो यतो न प्रत्यूहनिरासमन्तरेणाभीष्टपुरुषार्थसिद्धिरतो ब्रह्मा वरदराजस्तस्योपनिषदं रहस्यज्ञानं व्याख्यास्यामो निरूपयिष्याम इति

---

१. हरस्य E.

[1]ब्रह्मा देवानां सवितुः कवीना-
मृषिर्विप्राणां महिषो मृगाणाम् ।
धाता वसूनां सुरभिः सृजानां
नमो ब्रह्मणेऽथर्वपुत्राय मीढुषे ॥

---

वेदस्य वाक्यम् । ब्रह्मानृतवादितया परमेश्वरेण पञ्चा[१]यतनाद्बहिष्कृतस्ततो ब्रह्मणा स्तुतो महेश्वरो मत्पुत्रतां व्रजेत्युवाच । ततः पुत्रत्वमङ्गीकृत्य ब्रह्मणा महेश्वरः प्रार्थितस्त्वत्पुत्रत्वं गतस्य मम प्रथमं पूजास्तु तव च सर्वेषामन्तेऽस्त्विति । तत ईश्वरेण तथेत्युक्ते ब्रह्मा शिवोमातनयः सम्पन्नस्तस्येश्वरेण गणाधिपत्यं विघ्नाधिपत्यं च दत्तमिति पौराणः समाचारः तेनैषा गणपतेर्ब्रह्मरूपतया ब्रह्मोपनिषत् । अत्रापि च "सोऽपश्यदात्मनात्मानं गजरूपधरं देवं शशिवर्णं चतुर्भुजमि"त्युक्तेः प्रजापतेर्ब्रह्मण एव गजरूपधरत्वाद्ब्रह्मा गणपतिः । "पिता वै जायते पुत्र" इति तस्य शिवरूपता च । ग्रन्थादौ प्रत्यूहनिरासार्थमेतदुपनिषत्प्रतिपाद्यं ब्राह्मणमेवाथर्वाख्यज्येष्ठपुत्रतत्पुत्रसहितं मन्त्राभ्यां स्तौति श्रुतिर्ब्रह्मा देवानामिति । तत्तज्जातिषु यदुत्कृष्टं तद्देवस्वरूपमित्यर्थः । यथा देवानां मध्ये ब्रह्मा प्रजापतिः पारमेश्वरं रूपम् । कवीनां निरूपकाणां व्याख्यातॄणां मध्ये सवितुः सूर्यस्य स्वरूपमिति शेषः । सूर्यस्वरूपं पारमेश्वरं रूपमित्यर्थः । विप्राणां ब्राह्मणानामृषिर्द्रष्टा शाखाप्रवर्त्तकः । मृगाणामारण्यानां मध्ये महिषो महत्त्वविशिष्टः सिंहः । अविमह्योष्टिषच् । "मृगाणां च मृगा[२]धिपः" इति भगवद्वचनात् (गीता १०-३०) सिंहः । वसूनामष्टानां मध्ये धाता धातृनामा वसुः । सृजानां दुग्धदानां मध्ये सुरभिः कामधेनुर्ब्राह्मं तेजः । एवं विधाय ब्रह्मणे नमः । कीदृशाय । अथर्वपुत्राय अथर्वा पुत्रो यस्य तस्मै । अथर्वणे ज्येष्ठाय पुत्राय ब्रह्म

---

1. Cf. *Ṛigveda* 9. 96. 6.

---

१. See Notes. २. The *Gītā* reads मृगेन्द्रः.

धाता देवानां प्रथमं हि चेतो
मनो वनानीव मनसाकल्पयद्यः[1] ।
नमो ब्रह्मणे ब्रह्मपुत्राय तुभ्यं
ज्येष्ठायाथर्वपुत्राय धन्विने ॥ १ ॥

ॐ प्रजापतिः प्रजा असृजत । ताः सृष्टा अब्रुवन् कथमन्नाद्या अभवन्निति । स त्रेधा व्यभजद्भूर्भुवःस्वरिति । स तपोऽतप्यत । स ब्रह्मा स विष्णुः स शिवः

प्रोवाचेति श्रुतेः । मीढुषे सेक्त्रे जगद्बीजप्रदाय । "अहं बीजप्रदः पिते"ति स्मृतेः (गीता १४.४) । धाता ब्रह्मा हिरण्यगर्भो देवानां द्योतनात्मकानामिन्द्रियाणां प्रथममाद्यं चेतश्चित्तं यो धाता मनोऽन्तःकरणं वनानि मनोरथानिव मनसा सङ्कल्पशक्त्या अकल्पयज्जगत्कल्पितवान् । एवंविधाय ब्रह्मणे नमः । ब्रह्मपुत्राय ब्रह्मणः पुत्राय । कस्मै । ज्येष्ठाय सर्वपुत्रेभ्यः प्रथमायाथर्वण इत्यर्थः । तत्पुत्रायापि नमस्कारमाह अथर्वपुत्रायेति । अथर्वणः पुत्रायापि नमः । अत्रापि ज्येष्ठायेति गोज्यं आथर्वणायेत्यर्थः । धन्विने धनुर्वेदकुशलाय । पुरुषत्रयस्य नमस्कारः कृतः पितापुत्रयोरभेदप्रदर्शनाय समुच्चयार्थश्चकारो न प्रयुक्तः ॥ १ ॥

स्ववंशवृद्धिकरं ब्रह्मवंशं नमस्कृत्य ब्रह्माविर्भावरूपं गणपतिं साङ्गं निरूपयितुं तदुत्पत्तये प्रथममाख्यायिकामाह ओं प्रजापतिरिति । अन्नाद्या अन्नमाद्यमदनीयं येषां तेऽन्नाद्या भक्षणीयान्नयुक्ता इत्यर्थः । विशेषणस्यापि छान्दसः परनिपातः । अभवन् भूताः पुराकल्पे । पुराकल्पप्रश्नोऽस्मिन्नपि कल्पेऽन्नप्राप्त्युपायज्ञानार्थः । प्रजावचः श्रुत्वा सर्वेषां समानान्नप्राप्तिनिरासाय सात्त्विकराजसतामसप्राणिनः पृथक्कृत्य स प्रजापतिस्त्रेधा त्रिप्रकारं व्यभजत् विभक्तवान् । भूर्लोकस्तमःप्रधानो भुवर्लोको रजःप्रधानः स्वर्लोकः सत्त्वप्रधानः । त्रिधा

1. कल्पयेत् AB.

स प्रजापतिः सेन्द्रः सोऽग्निः समभवत्। स तूष्णीं मनसा ध्यायन् कथमिमेऽन्नाद्याः स्युरिति। सोऽपश्यदात्मनात्मानं गजरूपधरं देवं शशिवर्णं चतुर्भुजं यतो वा इमानि भूतानि जायन्ते यतो वायन्ति यत्रैव यन्ति च। तदेतदक्षरं परं ब्रह्म।

"एतस्माज्जायते[1] प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुरापो ज्योतिः पृथिवी विश्वस्य धारिणी।
पुरुष एवेदं विश्वं तपो ब्रह्म परामृतमिति" ॥ २ ॥

सोऽस्तुवत नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नमो वे-

---

विभज्य स प्रजापतिरन्नसिद्धये तपोऽतप्यत ध्यानादि कृतवान् "मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं परमं[1] तप" इति स्मृतेः (महाभारतं ३. २५९. २६) तपोबलेनाविर्भूतब्रह्मदर्शनः सर्वात्माभवदित्याह स ब्रह्मेति। सेन्द्रः स इन्द्र इत्यर्थः। ध्यायन् स्थित इति शेषः। किं ध्यायन् स्थित इत्यत आह कथमिति। इमे लोकाः कथमन्नाद्याः स्युरिति ध्यातवान्। अन्नप्रदमात्मरूपं ददर्शेत्याह सोऽपश्यदिति। आत्मना स्वयमेवात्मानं गजस्येव रूपं तस्य धरम्। न तु साक्षाद्गजरूपं वक्त्रस्यैव गजाकारत्वात्। तस्य तटस्थलक्षणमाह यत इति। वायन्ति शुष्यन्ति म्रियन्ते। पै ओवै शोषणे। यन्ति च भूतानि च यत्र गच्छन्तीत्यर्थः। स्वरूपलक्षणमाह तदेतदिति। अक्षरं न क्षरति परमुत्कृष्टं ब्रह्म निरवधिबृहत्त्वयुक्तम्। धारिणी धार्यतेऽनया। वैशेषिकादिवत्तटस्थकारणतां निरस्यति पुरुष एवेदं विश्वमिति। तपो धर्मः। ब्रह्म वेदः। परामृतं मोक्षः। इतिशब्दो रूपवर्णनसमाप्त्यर्थः ॥ २ ॥

स प्रजापतिर्गजरूपधरं देवं स्वात्मसम्भूतमस्तुवत स्तोतुमारब्धवान्। नमो ब्रह्मण इत्यारभ्य ब्रह्मपुत्रायेत्यन्ता स्तुतिः। ब्रह्मादीनि

---

1. *Muṇḍaka* 2. 1. 3, 10.

---

१. निश्चितं *Mahābhārata.*

देभ्यो नमो देवेभ्यो नम ऋषिभ्यो नमः कुल्येभ्यः[1] प्रकु-[2]ल्येभ्यो नमः सवित्रे प्रसवित्रे नमो भोज्याय प्रकृष्टाय कपर्दिने चक्राय चक्रधरायान्नायान्नपतये शिवाय सदाशिवाय तुर्याय तुरीयाय भूर्भुवःस्वःपते रायस्पते वाजिपते गोपते ऋग्यजुःसामाथर्वाङ्गिरःपते नमो ब्रह्मपुत्रायेति ॥ ३ ॥

सोऽब्रवीद्वरदोऽस्म्यहमिति । स प्रजापतिरब्रवीत्कथमिमेऽन्नाद्याः स्युरिति । स होवाच ब्रह्मपुत्रस्तपस्तेपे

तस्यैव रूपाणि । वेदेभ्य ऋगादिभ्यः । देवेभ्यो वसुरुद्रादित्यरूपेभ्यः । कुल्येभ्यः कुलोत्पन्नेभ्यस्तत्रापि [१]प्रकृष्टेभ्य आचारादिविशिष्टेभ्यः प्रकुल्येभ्यः । सवित्रे सूर्याय । प्रसवित्रे प्रसवनशीलाय । कपर्दिने कपर्दोऽस्य जटाजूटस्तद्वते । चक्राय सुदर्शनाय । चक्रधराय नारायणाय । सदाशिवः शिवस्यादिमूर्त्तिस्तस्मै । तुर्याय जाग्रत्स्वप्नसुषुप्तातीताय । तुरीयाय "देहः प्रकृतिरात्मा च तुरीयः परमेश्वरः" तस्मा इत्यर्थभेदादपौनरुक्त्यं तुर्यत्वतुरीयत्वयोः । भूरिति त्रिलोकीस्वामिन् । रैशब्देन धनं तस्य पते । वाजोऽन्नं तद्वन्तो वाजिनस्तत्पते विशेषणसंक्रमादन्नपत इत्यर्थः । गावः पशवः । ब्रह्मपुत्राय ध्यानबलेन ब्रह्मशरीरसम्भूताय । यथा "शरीरकोशातस्तस्याः पार्वत्या निसृताम्बिके" ति ॥ ३ ॥

एवं स्तुतः स गजरूपधरो देवो वरदोऽसीति ब्रह्माणमब्रवीत् । अभीष्टं याचते कथमिति । यथान्नाद्याः स्युस्तमुपायं ब्रूहीत्यर्थः । स हेत्यादि ज्ञातासीत्यन्तस्यान्वयः । स ब्रह्मपुत्रः प्रजापतिना प्रार्थितः संस्तदभीष्टसिद्धये सिद्धक्षेत्रे गङ्गातीरस्थे तपस्तेपे तप्तवान् । तपसि तप्ते सति स महायशा उवाच प्रजापतिं प्रति । किमुवाच । हे प्र-

1. कुलेभ्यः AB. 2. प्रकुलेभ्यः AB.

१. MSS. omit प्र.

सिद्धक्षेत्रे महायशाः स सर्वस्य वक्ता सर्वस्य ज्ञातासीति । स होवाच तपस्यन्तं सिद्धारण्ये भृगुपुत्रं पृच्छध्वमिति । ते प्रत्याययुः । स होवाच किमेतदिति । ते होचुः कथं वयमन्नाद्या भवाम इति । स तूष्णीं मनसा ध्यायन् कथमिमेऽन्नाद्याः स्युरिति । "स[1] एतमानुष्टुभं मन्त्रराजमपश्यत् । यदिदं किञ्च सर्वमसृजत । तस्मात्सर्वमानुष्टुभमित्याचक्षते यदिदं किञ्च । अनुष्टुभा वा इमानि भूतानि जायन्तेऽनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्ति । तस्यैषा भवति । अनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा भवति । वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचैवोद्यन्ति । परमा वा एषा छन्दसां यदनुष्टुप्" ।

जापते त्वं सर्वस्य वक्तासि त्वं सर्वस्य ज्ञातासीति । त्वदुक्तं त्वज्ज्ञातं च नान्यथा भविष्यतीति वरदानम् । ततः स प्रजापतिर्लब्धवरो ह प्रसिद्धावुवाच प्रजाः प्रतीति शेषः । तपस्यन्तं तपश्चरन्तं सिद्धारण्ये सिद्धक्षेत्रे वर्त्तमानं भृगुपुत्रं भार्गवं शुक्रं पृच्छध्वं यूयमिति । ते जनाः प्रति तं भृगुपुत्रमिति शेषः । प्रजास्तं भृगुपुत्रं प्रति आययुरागताः । स भृगुपुत्र उवाच किमेतदिति । किमागमनप्रयोजनमित्यर्थः । ते जना ह अन्नार्थिन ऊचुः कथमित्यादि व्याख्यातम् । अनुष्टुप्छन्दस्कमानुष्टुभं मन्त्रराजं वक्ष्यमाणम् । यदिदं किञ्च किञ्चन सर्वमसृजत सृष्टवान्मन्त्रराजेनेति प्रकरणात् । आचक्षते शिष्टाः । उपपादयत्यनुष्टुभा वा इति । तस्यानुष्टुभस्यैषा ऋग्भवति । अनुष्टुप् प्रथमा सृष्टेः प्रागुत्तमा पाश्चात्या प्रलयादनन्तरम् । परमापरमत्वं सामाधारत्वात् । साम्नश्च परमत्वं "देवा वै नर्चि न यजुष्यश्रयन्त साम्न्येवाश्रयन्त"[१] इति श्रुतेः । लोकतोऽपि तथैव ग्रन्थसंख्याव्यव-

1. *Nṛisiṁhapûrvatâpanî* 1. 1, slightly modified.

१. सामन्नेवा° D.

सर्वमनुष्टुप् । एतं मन्त्रराजं यः पश्यति स पश्यति । स भुक्तिं मुक्तिं च विन्दति तेन सर्वज्ञानं भवति । तदेतन्निदर्शनं भवति ।

एको देवः प्रापको यो वसूनां
श्रिया जुष्टः सर्वतोभद्र एषः ।
मायादेवो बलगहनो ब्रह्मा-
रातीस्तं देवमीडे दक्षिणास्यम् ॥

"आ[1] तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन" ॥ इति सहस्रकृत्वस्तुष्टाव ॥ ४ ॥

---

हारात् । सर्वमनुष्टुबिति । एतदन्ता ऋक् कार्यकारणयोरभेदात् । ज्ञानफलमाह एतमिति । निदर्शनं सम्मतिमन्त्रौ । मायादेवो मायाप्रधानो देवः । बलगहनोऽकलनीयबलः । हि निश्चितम् । अरातीर्वैरिणः प्रतीति शेषः । वैरिणः प्रत्यमितबल इत्यर्थः । दक्षिणास्यं यथार्थवाक्यम् । दक्षिणं कुशलमास्ये भवमास्यं वाक्यं यस्य तम् । दक्षिणभागे नम्रमास्यं यस्येति वा मूर्त्तिषु क्वचित्तथा दर्शनात् । गायत्र्या निदर्शनान्तरमाह आ तू न इति । हे इन्द्र परमेश्वर वरद नोऽस्माकं क्षुमन्तं इक्षुमन्तं चित्रं नानाभोग्ययुक्तं आग्राभं आग्राहमागृह्यत इत्याग्राहो विभागो दीयमानस्तं दक्षिणेन दक्षिणभागवलितास्येन महाहस्ती महाशुण्डावांस्त्वं सङ्गृभाय सङ्गृहाण । "हृग्रहोर्भश्छन्दसि" (महाभाष्यं ८. २. ३२) इति हस्य भः । "छन्दसि शायजपि" (पा० ३. १. ८४) इति शायच्प्रत्ययः । "ऋचि तुनुघमक्षुतंकुत्रोवृष्याणां" (पा० ६. ३. १३३) इति तुशब्दस्य दीर्घः । तु प्रथमं पश्चात्तु वरं दास्यसीति भावः । स भृगुसूनुः सहस्रकृत्वः सहस्रवारमारभ्य मन्त्राभ्यां तुष्टाव गजाननम् । अनेन सहस्रजपात्पुरश्चरणं भवतीति सूचितम् ॥ ४ ॥

---

1. *Ṛigveda* 8. 81. 1.

अथापश्यन्महादेवं श्रिया जुष्टं मदोत्कटम् ।
सनकादिमहायोगिवेदविद्भिरुपासितम् ॥
द्रुहिणादिमदेवेशषट्पदालिविराजितम् ।
लसत्कर्णं महादेवं गजरूपधरं शिवम् ॥

स होवाच वरदोऽस्मीति । स तूष्णीं मनसा वव्रे । स तथेति होवाच । तदेष श्लोकः ।

स संस्तुतो दैवतदेवसूनुः
सुतं भृगोर्वाक्यमुवाच तुष्टः ।
अवेहि मां भार्गव वक्रतुण्ड-
मनाथनाथं त्रिगुणात्मकं शिवम् ॥

अथ तस्य षडङ्गानि प्रादुर्बभूवुः । स होवाच जपध्वमा-

---

तदनन्तरं भृगुपुत्रस्य देवसाक्षात्कारो वृत्त इत्याह अथेति । महादेवं शिवमिति लिङ्गाद्धरांशताप्यस्येति गम्यते तेन ब्रह्महरस्वरूपो गजानन इति निश्चयः । द्रुहिणो ब्रह्मा स आदिमो येषां द्रुहिणादिमा ये देवेशास्त एव षट्पदास्तेषामालिः पङ्क्तिस्तया विराजितम् । लसन्तौ कर्णौ यस्य तं महान्तमुत्कृष्टं देवम् । देवदर्शनं वरदानायैवेत्याह स होवाचेति । स तूष्णीमिति । स भृगुपुत्रस्तूष्णीं मौनेनैव मनसा चेतसा वव्रे वृतवान् । क्षुधितत्वावेदनस्य लज्जाहेतुत्वात्तूष्णीं वरणम् । देवस्य सर्वज्ञत्वात्तूष्णीं वृत्तमपि ज्ञात्वा दत्तवानित्याह स तथेति होवाचेति । अत्रार्थे मन्त्रसम्मतिमाह तदेष इति । स गजरूपधरो दैवतदेवस्य ब्रह्मणः शिवस्य च सूनुः पुत्रो भृगोः सूनुं शुक्रं वक्रं दक्षिणांससङ्गतं तुण्डं मुखं यस्य तम् । अनाथानां दीनानां नाथं स्वामिनम् । न्यासविधिमाह अथेति । तस्यानुष्टुभस्य षडङ्गानि षडङ्गमन्त्रा वक्ष्यमाणाः । स भृगुपुत्र उवाच प्रजाः प्रति जपध्वमाव-

नुष्टुभं मन्त्रराजं षट्पदं सषडक्षरम् । इति यो जपति स भूतिमान् भवतीति यूयमन्नाद्या भवेयुरिति । तदेतन्निदर्शनम् ।

---

र्त्तयध्वमानुष्टुभं गाणपतं मन्त्रराजं महामन्त्रं सषडक्षरं वक्रतुण्डाय हुमिति षडक्षरस्तत्सहितम् । अनुष्टुबवयवेऽपि स्वातन्त्र्यसूचनाय सहभाव उक्तः । तदुक्तं ब्रह्मवैवर्त्ते ।

"प्रादुर्बभूव मनसि मन्त्रराजः षडक्षरः ।
द्रुतचामीकरप्रख्यो वक्रतुण्डाय हुमि"ति ॥

यद्वा । अग्रे वक्ष्यमाणैः षडक्षरैः षड्बीजैस्तारमायारमामारविघ्नेशधरणीसंज्ञैः सहितम् । तारः प्रणवो माया भुवनेश्वरीबीजं रमा श्रीबीजं मारः कामबीजं विघ्नेशो गंबीजम् । यद्वा हंसः शुचिषदित्यस्याद्यो वर्णो धरणी ग्लौंबीजम् । एतान्यादौ कृत्वानुष्टुब् जप्तव्येत्यर्थः । एवमष्टत्रिंशद्वर्णो मन्त्रो जपविधौ सिद्धः । तदुक्तं पद्मपुराणे वरदसहस्रनामस्तोत्रे ।

"तप्तकार्त्तस्वरप्रख्योऽथर्वमन्त्रः षडक्षरः ।
महानिधानं श्रीश्रीमान् ब्रह्मानन्दमयः सदोमि"ति ॥

अथर्वमन्त्र इत्यनेन षडक्षरस्य स्वातन्त्र्यमपि सूचितम् । अस्यर्ष्यादिकमनुष्टुब्वत् षड्भिर्बीजैः षडङ्गानि महागणपत्यष्टाविंशत्यक्षरः । आदावेतानि बीजानि सन्ति । अस्यानुष्टुभो मन्त्रराजस्य भार्गव ऋषिरनुष्टुप् छन्दः शिवोमायुतः परमात्मा वरदगणपतिर्देवता । अन्नादिद्वारा चतुर्वर्गसिद्ध्यर्थे जपे विनियोग इति प्रयोगः । ऋषिच्छन्दोदैवतानि शिरोवदनहृदयेषु विन्यसेत् । षट्पदैः करन्यासो हृदयादिन्यासश्च विधेयः । पदवर्णन्यासादि नारसिंहानुष्टुब्न्यायेन कल्पनीयं स्वकल्पतश्च विशेषोऽवगन्तव्यः । इति यो जपति उक्तमार्गेण यो जपेत्तस्य फलं स भूतिमानिति । यूयमन्नाद्या भवेयुर्लोका इति कामनया ज-

गणानां[1] त्वा गणनाथं सुरेन्द्रं
कविं कवीनामतिमेधविग्रहम् ।
ज्येष्ठराजं वृषभं केतुमेकं
सा नः शृण्वन्नूतिभिः सीद शश्वत् ॥ ५ ॥

ते होचुः कथमानुष्टुभं मन्त्रराजमभिजानीम इति । स एतमानुष्टुभं षट्पदं मन्त्रराजं कथयाञ्चक्रे । स साम भवति । ऋग्वै गायत्री यजुरुष्णिगनुष्टुप् साम । स आदित्यो भवति । ऋग्वै वसुर्यजू रुद्राः सामादित्या इति । स षट्पदो भवति । साम वै षट्पदः । स[2]सागरां सप्त-

पध्वमित्यनुषङ्गः । निदर्शनमन्त्रमाह गणानामिति । गणानां मध्ये गणनाथं श्रेष्ठगणम् । मेधा बुद्धिस्तदतीतदेहमतिमेधविग्रहम् । ज्येष्ठं राजानं ज्येष्ठराजम् । वृषभं बीजप्रदम् । केतुं श्रेष्ठम् । एकं प्रधानं यथैकवीर इति । सा नः स न इत्यर्थश्छान्दसो दीर्घः । स त्वं नोऽस्माकं वचः शृण्वन्नूतिभिः समृद्धिभिः सहितोऽस्मद्दानार्थं समृद्धिमान् सन् शश्वन्नित्यं सीद प्रवर्त्तस्व । अस्मभ्यं सदा कामान्देहीत्यर्थः ॥ ५ ॥

ते जना ह ऊचुर्भार्गवं प्रति कथमिति । तत्स्वरूपं न उपदिशेत्यर्थः । स्वरूपकथनानन्तरं तस्य सामसम्बन्धं सोपासनमाह स सामेति । तत्र सामगानं नृसिंहानुष्टुब्वदवगन्तव्यं साम्नयादित्यदृष्टिश्च कर्त्तव्येत्यर्थः । तदुपपादनं ऋग्वा इत्यादि । साम वै षट्पदः पङ्क्तिपक्षे । छान्दोग्ये साम्नः पञ्च भक्तयः सप्त भक्तयश्चोक्ताः । हिङ्कारः प्रस्ताव उद्गीथः प्रतिहारो निधनमिति पञ्च । तत्र हिङ्कारः प्रस्ताव आदिरुद्गीथः प्रतिहार उपद्रवो निधनमिति सप्त । षड्भक्तिपक्षे मूलं गवेषणीयम् । आदिप्रस्तावयोरैक्याभिप्रायेण वा षड्भक्तिता द्रष्टव्या । षट्सु पदेषु षड्लोकदृष्टिः कर्त्तव्येत्युपासनान्तरमाह ससागरामिति । अत्र षट्सु पर्यायेषु पादशब्दः पदपरो द्रष्टव्यः । रायस्पो-

1. Cf. *Rigveda* 2. 23. 1. 2. Cf. *Nrisimhapû*. 1. 2.

द्वीपां सपर्वतां वसुन्धरां तत्साम्नः प्रथमं पादं जानीयाद्रायस्पोषस्य दातेति । तेन सप्तद्वीपाधिपो भवति भूःपतित्वं च गच्छति । यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षं द्वितीयं पादं जानीयान्निधिदातेति । तेन धनदादिकाष्ठापतिर्भवति भुवःपतित्वं च गच्छति । वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयादन्नदो मत इति । तेन देवाधिपत्यं स्वःपतित्वं च गच्छति । ऋग्यजुःसामाथर्वाङ्गिरोगणसेवितं ब्रह्मलोकं तुर्यं पादं जानीयाद्रक्षोहण इति । तेन देवाधिपत्यं ब्रह्माधिपत्यं च गच्छति । वासुदेवादिचतुर्व्यूहसेवितं विष्णुलोकं तत्साम्नः पञ्चमं पादं जानीयाद्बलगहन इति । तेन सर्वदेवाधिपत्यं विष्णुलोकाधिपत्यं च गच्छति । ब्रह्मस्वरूपं निरञ्जनं परमव्योम्निकं तत्साम्नः षष्ठं पादं जानीयात्तेन वक्रतुण्डाय हुमिति यो जानीयात्सोऽमृतत्वं च गच्छति सत्यलोकाधिपत्यं च गच्छति ॥ ६ ॥

---

षस्य दातेति प्रथमं पदं हृदयाख्यम् । तेनेत्याद्यावयवफलं कर्मणीव गुणफलम् । निधिदातेति मन्त्रस्य द्वितीयं पदं शिरआख्यम् । अन्नदो मत इति तृतीयं पदं शिखाख्यम् । रक्षोहण इति चतुर्थं पदं कवचम् । चतुर्व्यूहा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्याः । अत एव लिङ्गाद्द्युलोकाद्ब्रह्मलोकाच्चान्यो विष्णुलोक इति गम्यते न तु कैलासवैकुण्ठादयो ब्रह्मलोकैकदेशाः । बलगहन इति पञ्चमं पदं नेत्रम् । परमव्योम्निकं परमव्योमप्रयोजनकं प्रयोजनमिति ठञ्टिलोपाभावोऽल्लोपश्च छान्दसः । तेनेत्यस्य गच्छतीत्यनेनान्वयः । वक्रतुण्डाय हुमिति मन्त्रस्य षष्ठं पदमस्त्राख्यम् । सोऽमृतत्वं तेन षष्ठपदज्ञानेन गच्छति । इदमत्र तात्पर्यं वरदराजस्य हृदयादिषु षट्स्वङ्गेषु ससागरामित्यादयो विशिष्टा लोकाः क्रमेणाश्रितास्ते तथैवोपास्या इति ॥ ६ ॥

ऋग्यजुःसामाथर्वाश्चत्वारो वेदाश्चत्वारः पादा भवन्ति । रायस्पोषस्य दाता चेति प्रथमः पादो भवति ऋग्वै प्रथमः पादः । निधिदातान्नदो मत इति द्वितीयः पादो यजुर्वै द्वितीयः पादः । रक्षोहणो वो बलगहन इति तृतीयः पादः साम वै तृतीयः पादः । वक्रतुण्डाय हुमिति चतुर्थः पादोऽथर्वश्चतुर्थः पादोऽथर्वश्चतुर्थः पाद इति ॥ ७ ॥

इति वरदपूर्वतापनीये प्रथमोपनिषत्समाप्ता ॥

---

चतुर्षु पादेषु ऋगादिचतुर्वेददृष्टिः कर्त्तव्येत्याह ऋग्यजुरिति । दाता चेति चकारः पादपूरणे । दशाक्षरस्तृतीयः षडक्षरश्चतुर्थः । मन्त्रार्थस्तु । आदौ प्रथमान्तानि षड्विशेषणानि व्याख्यायन्ते । रैशब्दो धनवाची तस्य पोषः पोषणं तस्य दातात्वम् । "तत्पुरुषे कृति बहुलं" ( पा० ६. ३. १४ ) इति षष्ठ्या अलुक् । "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" ( पा० ८. ३. ५३ ) इति सकारः । चः पादपूरणे । निधिदाता निधीनां नवानां दाता अन्नदोऽन्नस्य दाता । र[1]क्षोहणो रक्षसां हन्ता । पचाद्यजन्तेन हनशब्देन षष्ठीसमासः । बलगहनो व्याख्यातः । यद्वा वल्गन्ति ते वलगाः पचाद्यच्छान्दसोऽकारः । वल्गा इत्यर्थः । तेषां हनो हन्ता । वो युष्माकम् । पञ्चविशेषणोक्तफलदो मतोऽभिमतो ज्ञात इत्यर्थः । हुंशब्दः कवचवाची तद्योगे चतुर्थी । वक्रतुण्डोऽस्माकं कवचमित्यर्थः । अथर्वश्चतुर्थपादः । अथर्वशब्दोऽकारान्तोऽप्यस्ति । द्विरुक्तिर्निश्चयार्था । इतिशब्दः समाप्त्यर्थः ॥ ७ ॥

इति पूर्वतापनीये प्रथमोपनिषद्दीपिका ॥

---

१. For this and वलगहन see *Vâjasaneyi-samhitâ* V. 25 and the commentary.

# द्वितीयोपनिषत् ।

स होवाच प्रजापतिरग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि विराट् स्वराट् सम्राट् तत्साम्नः प्रथमं पादं जानीयात् । ऋग्यजुःसामाथर्वरूपः सूर्योऽन्तरादित्ये हिरण्मयः पुरुषस्तत्साम्नो द्वितीयं पादं जानीयात् । य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात् । यो ब्रह्मा तत्साम्नश्चतुर्थं पादं जानीयात् । यो हरिस्तत्साम्नः पञ्चमं पादं जानीयात् । यः शिवः स परं ब्रह्म तत्साम्नोऽन्त्यं पादं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति परं ब्रह्मैव भवति । तस्मादिदमानुष्टुभं साम यत्रक्वचिन्नाचष्टे । यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय वेति ॥ १ ॥

तस्य हि षडङ्गानि भवन्ति । ॐ हृदयाय नमः शि-

---

षट्सु पदेष्वङ्गेषु देवता आह स होवाचेति । अग्न्यादयो विशिष्टाः क्रमेणाङ्गदेवता इत्यर्थः । विराडादिग्रहणं राजोऽप्युपलक्षणम् । राड्विराट् स्वराट् सम्राट् पूर्वाद्याश्चतस्रो दिशः । ऋगिति । वेदचतुष्टयरूपता सूर्यस्य सर्ववेदप्रसिद्धा । प्रभवति प्रभुर्भवति । यो हरिः स इत्युद्देश्य विभक्तिर्लिङ्गवत्पर्यायेण ज्ञेया । परं ब्रह्मैव भवतीत्युपासनस्य मुक्तिः फलमित्यर्थः । आनुष्टुभं सामेत्युक्तेरनुष्टुप्सम्बन्धि साम गानरूपं शार्दूल्यादिशाखास्वस्तीति गम्यते । अनधिकारिणे न देयमित्याह यत्रक्वचिदिति । दास्यति दद्यादित्यर्थः ॥ १ ॥

इदानीं षडङ्गजातिमन्त्रानाह तस्य हीति । उक्तंच शारदातिलके ( ४. ३३, ३४ )

---

1. देव B. 2. प्रभविता B.

रसे स्वाहा शिखायै वषट् कवचाय हुं नेत्रत्रयाय वौषडस्त्राय फडिति प्रथमं प्रथमेन द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन षष्ठं षष्ठेन प्रत्यक्षरमुभयतो माया लक्ष्मीश्च भवति। "[1]माया वा एषा वैनायकी सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं वेद स मृत्युं जयति स पाप्मानं तरति स महतीं श्रियमश्नुते सोऽभिवादी षट्कर्मसंसिद्धो भवत्यमृतत्वं च गच्छति। मीमांसन्ते ब्रह्मवादिनो ह्रस्वा वा दीर्घा वा प्लुता वेति। यदि ह्रस्वा भवति सर्वपाप्मानं तरत्यमृतत्वं च गच्छति। यदि दीर्घा भवति महतीं श्रियमाप्नुयादमृतत्वं च गच्छति। यदि प्लुता भवति ज्ञानवान् भवत्यमृतत्वं च गच्छति। तदेतदृषिणोक्तं निदर्शनम्।

---

"हृदयाय नमःपूर्वं शिरसे वह्निवल्लभा।
शिखायै वषडित्युक्तं कवचाय हुमीरितम्।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात्"॥

इति प्रथमं प्रथमेनेति। प्रत्यक्षरमिति। ईं रां श्रीं ईं यं श्रीं ईं स्यों श्रीं ईं षं श्रीं ईं स्यं श्रीं ईं दां श्रीं ईं तां श्रीं ईं चं श्रीं हृदयाय नम इत्यादिप्रयोगः। एवं पञ्चसु। तत्र का मायेत्यत आह माया वा इति। वैनायकी विनायकसम्बन्धिनी विनायकाधीनत्वात्। मायाविपुरुषाधीना हि माया। वेद यः स मृत्युं जयतीति यच्छब्दाध्याहारः। अभिवादी आभिमुख्येन वदनशीलः। षट्कर्मसंसिद्धः षट्सु कर्मसु सम्यक् सिद्धः। षट्कर्माणि वश्याकर्षणस्तम्भनमोहनोच्चाटनमारणानि। मायाया ह्रस्वादिभेदानां फलान्याह

---

1. *Nṛisiṁhapūrvatāpanī* 3. 1. The word वैनायकी has been substituted for नारसिंही.

स ईं पाहि य ऋजीषी तरुद्रः[1]
स श्रियं लक्ष्मीमौपलाम्बिकां गाम् ।
षष्ठीं च यामिन्द्रसेनेत्युत आ-
हुस्तां विद्यां ब्रह्मयोनिस्वरूपाम् ॥
तामिहायुषे शरणं प्रपद्ये" ।

क्षीरोदार्णवशायिनं कल्पद्रुमाधःस्थितं वरदं व्योमरूपिणं प्रचण्डदण्डदोर्दण्डं वक्रतुण्डस्वरूपिणं पार्श्वाधःस्थितकामधेनुं शिवोमातनयं विभुम् ।

रुक्माम्बरनिभाकाशं रक्तवर्णं चतुर्भुजम् ।
कपर्दिनं शिवं शान्तं भक्तानामभयप्रदम् ॥

---

यदि ह्रस्वेति । गीतिवशात्प्लुतैवेति प्राप्ते ह्रस्वदीर्घयोः फलाय विधिः । व्यञ्जनरहिताया मायायाः स्वरूपं मन्त्रेण दर्शयति तदेतदिति । ऋजीषी ऋजीषं गोमयं तदिन्धनत्वेन यस्यास्ति ऋजीषी वह्निः । तथा तरून्दग्धुं द्रवति तरुद्रः । स त्वं ईं लक्ष्मीं पाहि रक्ष । "धनमिच्छेद्धुताशनादि"ति स्मृतेः । अः कृष्ण आः स्वयम्भूरिः काम ईः श्रीरुरीश्वर इति निघण्टुः । तरुत्र इति पाठे तरूंस्त्रायते स्वाधिष्ठानत्वेनेत्यग्निरेव । लक्ष्म्याः सप्त भेदानाह श्रियमित्यादि । श्रीर्हरिप्रिया लक्ष्मीर्वरदशक्तिरौपला उत्पलवासिनी अम्बिका पार्वती गौः कामधेनुः सरस्वती षष्ठी स्कन्दशक्तिः । इन्द्रसेना नामेन्द्राणी । विद्या ब्रह्मशक्तिर्ब्रह्म वेदस्तस्या योनिरुत्पत्तिस्थानम् । एताः शक्तीः शिरसि देवमभिषिञ्चन्तीर्ध्यायेत् । इष्टदेवतां स्तौति क्षीरोदेति । अनेन विष्णवंशताप्युक्ता । त्रिगुणत्वाच्च त्रितयांशता युक्ता । व्योमरूपिणं स्वच्छदेहम् । प्रचण्डो यो दण्डस्तद्वद्दोर्दण्डा यस्य आजानुबाहुमित्यर्थः । पार्श्वे विनयेनाधो निम्नभागे स्थिता कामधेनुर्यस्य तम् । शिवस्योमायाश्च तनयं पुत्रम् । रुक्माम्बरनिभाकाशं सौवर्णवस्त्रसमा-

---

1. °त्रः AB.

उन्नतप्रपदाङ्गुष्ठं गूढगुल्फं सपार्ष्णिकम् ।
पीनजंघं गूढजानुं स्थूलोरुं प्रोन्नमत्कटिम् ॥
निम्ननाभिं कम्बुकण्ठं लम्बोष्ठं लम्बनासिकम् ।
सिद्धिबुद्ध्युभयाश्लिष्टं प्रसन्नवदनाम्बुजम् ॥

इति संसर्गः ॥ २ ॥

अथ छन्दोदैवतम् । अनुष्टुप्छन्दो भवति द्वात्रिंशदक्षरानुष्टुब् भवति । अनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतम् । शिवोमायुतः परमात्मा वरदो देवता । ते होचुः कथं शिवोमायुत इति । स होवाच भृगुपुत्रः प्रकृतिपुरुषमयो हि स धनद इति प्रकृतिर्माया पुरुषः शिव इति । सोऽयं विश्वात्मा देवतेति । तदेतन्निदर्शनम् ।

---

नवर्णम् । प्रपदं पादोपरिभागः । सपार्ष्णिकं विपुलमांसलपार्ष्णिम् । पार्ष्णिः पादपश्चाद्भागः । प्रशंसायां बहुव्रीहिः । जानुपादमध्योन्नतप्रदेशः । प्रोन्नमन्ती उन्नता कटिर्यस्य तम् । निम्ना गम्भीरा नाभिर्यस्य तम् । कम्बुकण्ठं कम्बुवत्कण्ठो यस्य तम् । नासिका शुण्डा । सिद्धिबुद्धी भार्ये । इति संसर्गः सम्यग्मन्त्रोद्धारः ॥ २ ॥

अथ छन्दोदैवतमिति । ऋषिः स भृगुपुत्र एवं कृत्वा सिद्धः । अनुष्टुप्त्वे हेतुमाह द्वात्रिंशदिति । शिवश्चोमा या पार्वती च ताभ्यां युतः सहितः शिवशक्त्यात्मक इत्यर्थः । धनदो धनस्य दाता प्रकृतिपुरुषरूपः परमात्मा वरद इत्यत्र मन्त्रसम्मतिमाह तदेतदिति । इन्द्र आत्मा वरदः । इदि परमैश्वर्ये । स एव मायाभिः स्वशक्तिभिः पुरुहूतः शक्तः सन् ईडे तुष्टुवे यजमानैः स्तुतः । स एव शर्वः । सोऽजः स एवाजो ब्रह्मापि विष्णुर्नारायणः सन् शेते क्षीराब्धौ । मायया गुहायां न्यस्तं स्वयंक्षिप्तं विश्वं भुवनं स एवैको विजज्ञे वि-

[1]इन्द्रो मायाभिः पुरुहूत ईडे
शर्वो विश्वं मायया स्विद्दधार ।
सोऽजः शेते मायया स्विद्गुहायां
विश्वं न्यस्तं विष्णुरेको विजज्ञे ॥
तदेतन्माया हंसमयी देवानाम् ।

[2]सर्वेषां वा एतद्भूतानामाकाशः परायणम् । सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते जातानि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति । तस्मादाकाशबीजं शिवो विद्यात् । तदेतन्निदर्शनम् ।

हंसः शुचिषद्वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहदिति ॥ ३ ॥

---

ज्ञातवान् जानाति । सिद्धमर्थमाह तदेतन्माया हंसमयीति । तदेतत्सिद्धं किं माया हंसमयी हंसविदर्भिता देवानां शक्रादीनां स्वरूपं गणपतिरूपं सर्वदेवरूपेण विसृतमित्यर्थः । हंसः परमात्मा । इदानीमेतन्मन्त्रं प्रतिपाद्य देवताबीजं वक्तुं बीजस्वरूपं तावदाह सर्वेषां वा इत्यादि । आकाशो ब्रह्म तत्परायणं परमयनम् । आकाशबीजं हंशब्दस्तं शिव इति विद्याज्जानीयात् । अत्र मन्त्रमाह तदिति । अष्टादशभिः पदैरेक एवात्मा स्तूयते । वसुर्वसन्ति सर्वेऽस्मिन्निति । दुरोणसद्द्रोणकलशे सीदति । अब्जा अप्सु जायते । "विड्वनोरनुनासिकस्यात्" ( पा० ६. ४. ४१ ) ॥ ३ ॥

---

1. Cf. *Rigveda* 6. 47. 18. 2. Cf. last part of *Nṛisiṁha-pûrvatâpanî* 3. 1.

अथाधिष्ठानम् । मध्ये बिन्दुं त्रिकोणं तदनु ऋतुगणं वसुदलं द्वादशारं षोडशकर्णिकेति । मध्ये बीजात्मकं देवं यजेत् । वामदक्षिणे सिद्धिर्बुद्धिः । अग्रे कामदुघा षट्कोणे सुमुखादयः षड्विनायकाः । वसुदले

अथाधिष्ठानमिति । देवताधिष्ठानमाधारः पीठं कथ्यत इत्यर्थः । मध्ये बिन्दुं नभोमण्डलं लिखित्वा तदुपरि त्रिकोणं तदुपरि षट्कोणं लिखित्वा ततोऽष्टदलं पद्मं तदुपरि द्वादशदलं ततः षोडशदलं लिखेत् । षोडशकर्णिकेति षोडशदलस्य कर्णिका कर्त्तव्येत्युत्तरपदलोपी समासः । एवं पीठमुक्त्वा तत्र पूजास्थानान्याह मध्य इति । बीजात्मकं पूर्वोक्तहंबीजरूपम् । प्रसिद्धं गणपतेर्बीजं ( शारदातिलकं १३. २ ) ।

"पञ्चान्तकं शशिधरं बीजं गणपतेर्विदुरि"ति ।

पञ्चान्तको गकारः । शशी बिन्दुः । तत्र मण्डूकाद्यात्मान्तं पीठपूजा नृसिंह उक्ता द्रष्टव्या । पीठमन्त्रः पीठशक्तयश्चैकाक्षरगणपतिपटलोक्ता द्रष्टव्याः । तद्यथा ( शारदातिलकं १३. ७, ८ ) ।

"तीव्रादिशक्तिभिर्युक्ते पीठे विघ्नेश्वरं यजेत् ।
तीव्राख्या ज्वलिनी नन्दा भोगदा कामरूपिणी ।
उग्रा तेजस्वती सत्या नवमी विघ्ननाशिनी" ॥

इति शक्तयः । सर्वशक्तिकमलासनाय नम इति पीठमन्त्रः । तदुक्तं ( शारदा० १३. ८, ९ ) ।

"सर्वादिशक्तिकमलासनाय हृदयावधिः ।
पीठमन्त्रोऽयमेतेन प्रदद्यादासनं विभोरि"ति ॥

मूर्त्तिं बीजेन कल्पयेत् । देवस्य वामे सिद्धिं यजेद्दक्षिणे बुद्धिं त्रिकोणाग्रे कामदुघां षट्कोणे सुमुखादीन् षड्विनायकान् यजेत् । तद्यथा ( शारदा० १३. ४९–५४ ) ।

१. See Notes.

"आमोदं सिद्धिसहितमग्रकोणे समर्चयेत् ।
समृद्ध्यायुतमभ्यर्च्य प्रमोदं वह्निकोणतः ॥
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ।
दुर्मुखं मदनावत्या[1] यजेद्वरुणकोणके ॥
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् ।
वायव्ये विघ्नकर्त्तारं द्राविण्या सहितं यजेत् ॥
पाशाङ्कुशाभयाभीष्टधारिण्योऽरुणविग्रहाः ।
गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ॥
विघ्नास्तत्प्रमदाः सर्वा मदाघूर्णितलोचनाः ।
एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ॥
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् ।
निजप्रियाभ्यां सहितौ पूर्वोदीरितलक्षणावि"ति ॥

अष्टदले वक्रतुण्डादीनष्टौ । वक्रतुण्डादयो यथा ( शारदा० १३. १२–१४ ) ।

"पत्रमध्येषु विधिवद्वक्रतुण्डादिकान् यजेत् ।
वक्रतुण्डमेकदंष्ट्रं महोदरगजाननौ ॥
लम्बोदराख्यं विकटं विघ्नराजमनन्तरम् ।
धूम्रवर्णं.... ......................................" ॥ इति ।

वक्रतुण्डाद्यावरणानन्तरं ब्राह्म्याद्यावरणमपि बोद्धव्यम् । तदुक्तं ( शारदा० १३. १४ ) ।

"........दलाग्रेषु ब्राह्म्याद्याः पूजयेत्ततः" । इति ।

"ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी स्मृता ।
वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी मता ।
अष्टमी स्यान्महालक्ष्मीः प्रोक्ताः स्युर्विश्वमातरः" ॥

तासां ध्यानानि यथा ।

"दण्डं कमण्डलुं पश्चादक्षसूत्रं तथाभयम् ।
बिभ्रती कनकच्छाया ब्राह्मी कृष्णाजिनोज्ज्वला ॥

---

१. The fragment of MS. No. 233of 1882–83 (P)ends here.

वक्रतुण्डाद्यष्टविनायकाः । द्वादशारे बटुको वामनो मंदाशकमहोदरौ सुभद्रो माली वरो राम उमा शिवः स्कन्दो नन्दी । तद्वाह्येऽणिमादिसिद्धयः । षोडशारे दिक्पालाः सायुधा इति ॥ ४ ॥

---

शूलं परश्वधं क्षुद्रदुन्दुभिं नृकरोटिकाम् ।
वहन्ती हिमसङ्काशा ध्येया माहेश्वरी शुभा ॥
अङ्कुशं दण्डखट्वाङ्गौ पाशं च दधती करैः ।
ध्येया बन्धूकसङ्काशा कौमारी कामदायिनी ॥
चक्रं घण्टां कपालं च शङ्खं च दधती करैः ।
तमालश्यामला ध्येया वैष्णवी विभ्रमोज्ज्वला ॥
मुसलं करवालं च खेटकं दधती हलम् ।
करैश्चतुर्भिर्वाराही ध्येया कालघनच्छविः ॥
अङ्कुशं तोमरं विद्युत्कलशौ बिभ्रती करैः ।
इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा ॥
शूलं कपालं नृशिरः[1]कपालं दधती करैः ।
मुण्डस्रग्मण्डिता ध्येया चामुण्डा रक्तविग्रहा ॥
अक्षजं बीजपूरं च कपालं पङ्कजं करैः ।
वहन्ती हेमसङ्काशा महालक्ष्मीः समीरिता" इति ।

बटुकादयो मूले पठिताः । द्वादशदले बटुकादीन् षोडशारेऽष्टमहासिद्धीरष्टदिक्पालांश्च सायुधान्यजेत् । अष्टमहासिद्धयो यथा ।

"अणिमा महिमा चैव गरिमा लघिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं हृदयज्ञता" ॥ इति ।

लोकपाला यथा ।

"इन्द्रमग्निं यमं रक्षो वरुणं पवनं विधुम् ।
ईशानं पन्नगाधीशमधऊर्ध्वे पितामहम्" ॥ इति ।

---

1 मदाशको महोदरः B.

---

१. पातालं B.

अथ प्रसारः ।

य एतेन चतुर्थीषु पक्षयोरुभयोरपि ।
लक्षं जुहुयादपूपानां तत्क्षणाद्धनदो भवेत् ॥
सिद्धौदनं त्रिमासं तु जुह्वदन्नावनन्यधीः ।
तावज्जुह्वन्पृथुकान्हि साक्षाद्वैश्रवणो भवेत् ॥
उच्चाटयेद्विभीतैश्च मारयेद्विषवृक्षजैः ।
वश्याय पङ्कजैर्विद्वान्धनार्थी मोदकैर्हुनेत्[1] ॥

एवं ज्ञात्वा कृतकर्मा भवति कृतकर्मा भवतीति ॥ ५ ॥

इति वरदपूर्वतापनीये द्वितीयोपनिषत्समाप्ता ॥ २ ॥

---

तदायुधानि यथा ।

"वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।
शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः" ॥ इति ॥ ४ ॥

अथ प्रसारप्रयोग उच्यत इति शेषः । तमेवाह य एतेनेति । उभयोः शुक्लकृष्णयोः । अपूपानां पिष्टमयानाम् । पृथुकान् भ्रष्टव्रीहितण्डुलान् । विभीतकैर्विभीतकफलैः । विषवृक्षजैः कारस्करसम्भूतैः । पङ्कजैः कमलैः । कृतकर्मा साधितकार्यः । द्विरुक्तिः समाप्त्यर्था ॥ ५ ॥

इति पूर्वतापनीये द्वितीयोपनिषद्दीपिका ॥

---

1. See Notes.

# तृतीयोपनिषत् ।

अथ होवाच भृगुपुत्रस्तन्त्रं विजिज्ञासितव्यमिति । मूले शून्यं विजानीयात् । शून्यं वै परं ब्रह्म तत्र सतारं समायं साम न्यसेत्त्रिरेखं भवति त्रयो हीमे लोकास्त्रयो हीमे वेदाः । ऋग्वै भूः सा माया भवति । यजुर्वै भुवः स शिवो भवति । साम वै स्वः स हिरण्यगर्भो भवति । षट्कोणं भवति षड्ढीमे लोकाः षड्वा ऋतवो भवन्ति । तत्र तारमायारमामारविश्वेशधरणीक्रमान्न्यसेत् । अष्टपत्रं भवत्यष्टाक्षरा गायत्री भवति ब्रह्मगायत्रीं न्यसेत् । द्वादशपत्रं भवति द्वादशादित्या भवन्ति ते स्वरा भवन्ति । स्वरान् ज्ञात्वादित्यलोकमश्नुते । षोडशपत्रं भवति षोडशकलो वै पुरुषो वर्णो ह वै पुरुषः स लोकाधिष्ठितो भवत्यनुष्टुब् वै पुरुषः ॥ १ ॥

---

तन्त्रं विजिज्ञासितव्यं ज्ञातुमेष्टव्यं भवद्भिर्मत्त इति भृगुपुत्रवचः । तन्त्रं धारणायन्त्रम् । मूले आदौ । शून्यमाकाशमण्डलम् । सतारं सप्रणवम् । समायं मायाबीजसहितम् । सामानुष्टुब् मन्त्रराजम् । न्यसेल्लिखेत् । ततस्त्रिरेखं त्रिकोणं भवति । तत्र व्याहृतित्रयं लिखेदित्याह त्रयो हीम इति । ततः षट्कोणं तस्य त्रैलोक्यरूपतामाह षड्ढीम इति । सप्तपातालानां भूर्लोकेऽन्तरिक्षस्य च स्वर्लोकेऽन्तर्भावात् । तत्र तारादिषड्बीजानि लिखेत् । ततोऽष्टदलेऽष्टाक्षरा पादशः । तत्र त्रिशो ब्रह्मगायत्रीवर्णांल्लिखेत् । सा यथा । "तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयादि"ति ( महानारायणोप० ३. ४ ) । ब्रह्मा वरदः । ततो द्वादशदलम् । तत्र नपुंसकवर्जं द्वादशस्वरांल्लिखेत् । ऋ ॠ ऌ ॡ नपुंसकम् । ततः षोडश-

स होवाच भृगुपुत्र एतमानुष्टुभं मन्त्रराजं साङ्गं सप्रसृतिकं समायं साधिष्ठानं सतन्त्रं यो जानाति स भूतिमान् भवति सोऽमृतत्वं च गच्छति सोऽमृतत्वं च गच्छतीति ॥ २ ॥

इति वरदपूर्वतापनीये तृतीयोपनिषत्समाप्ता ॥ ३ ॥
इत्यथर्ववेदे गणपतिपूर्वतापनीयोपनिषत्समाप्ता ॥ ५१ ॥

---

दलम् । तत्र कादिसान्तान् वर्णान्द्विशो लिखेत् । पुरुषस्य षोडशकला दशेन्द्रियाणि पञ्च प्राणा मनश्च । वर्णोऽक्षरं कादि तन्मयत्वात्पुरुषो वर्णः । लेखनप्रकारः स्पष्टः । द्वात्रिंशदेव व्यञ्जनानि किमिति लिख्यन्तेऽत आह अनुष्टुब्वा इति ॥ १ ॥

उक्तमर्थमुपसंहरति स होवाच भृगुपुत्र इति । साङ्गं उक्तषडङ्गसहितम् । सप्रसृतिकं प्रसृतिः प्रसारः प्रयोगस्तत्सहितम् । समायं माया पूर्वोक्ता तत्सहितम् । साधिष्ठानं अधिष्ठानं पीठं तत्सहितम् । सतन्त्रं तन्त्रं धारणयन्त्रं तत्सहितम् । उपलक्षणमेतत् । ससर्गं सच्छन्दोदैवतमित्यपि द्रष्टव्यम् । संसर्गो मन्त्रोद्धारादिर्ध्यानान्तः । एवंविधं मन्त्रराजं यो जानाति वेद उपास्ते स भूतिमान् समृद्धिमान् जीवन् भवति । अमृतत्वं च गच्छति देहान्त इति शेषः । गानं नृसिंहानुष्टुबुक्तमार्गेण द्रष्टव्यम् । द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥ २ ॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानामाद्या वरददीपिका ॥

इत्यथर्वशिरसि वरदपूर्वतापनीयोपनिषद्दीपिका समाप्ता ॥

# वरदोत्तरतापनी ।



ॐ । ओमित्येकाक्षरं ब्रह्मेदं सर्वम् । तस्योपव्याख्यानम् । सर्वं भूतं भव्यं भविष्यदिति सर्वमोङ्कार एव। एतच्चान्यच्च त्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद्गणेशोऽयमात्मा ब्रह्मेति । सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । नान्तःप्रज्ञं न[1] बहिःप्रज्ञं न[1] नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न[1] प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स गणेश आत्मा विज्ञेयः । सदोज्वलो विद्यातत्कार्यहीनः स्वात्मबन्धरहितः सर्वदोषरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहमेवेति सम्भाव्याहमों तत्सत्परं ब्रह्म विघ्नराजश्चिदात्मकः सोऽहमों तद्विनायकं परं ज्योती रसोऽहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् ।

---

1. न not in MS.

विनायकोऽहमित्येतत्तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं प्रमोदो वै न संशयः ॥

इत्युपनिषत् । य एवं वेद स मुख्यो भवतीति याज्ञवल्क्य इति याज्ञवल्क्य इति ।

एतदेव परं ध्यानमेतदेव परं तपः ।
विनायकस्य यज्ज्ञानं पूजनं भवमोचनम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ॥

इति गणेशोत्तरतापन्यां प्रथमोपनिषत् ॥

---

# द्वितीयोपनिषत् ।

ॐ । स विष्णुः स शिवः स ब्रह्मा सेन्द्रः सेन्दुः स सूर्यः स वायुः सोऽग्निः स ब्रह्मायमात्मने सर्वदेवाय आत्मने भूताय आत्मन इति मन्यन्ते । ओं सोऽहं ओं सोऽहं ओं सोऽहमिति । ओं ब्रह्मन् ओं ब्रह्मन् ओं ब्रह्मन्निति । ओं शिवं ओं शिवं ओं शिवमिति । तं गणेशं तं गणेशं तं गणेशमिदं श्रेष्ठम् । ओं गणानां त्वा गणपतिः । सप्रियाणां त्वा प्रियपतिः । सनिधीनां त्वा निधिपतिः । ओं तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् । ओं तद्गणेशः । ओं सद्गणेशः । ओं परं गणेशः । ओं ब्रह्म गणेशः । गणनाकारो नादः । एतत्सर्वो नादः । सर्वाकारो नादः । एतदाकारो नादः । महान्नादः । स गणेशो महान् भवति । सोऽणुर्भवति । स वन्द्यो भवति । स मुख्यो भवति । स पूज्यो भवति । रूपवान् भवति । अरूपवान् भवति । द्वैतो भवति । अद्वैतो भवति । स्थावरस्वरूपवान् भवति । जङ्गमस्वरूपवान् भवति । सचेतननिचेतनो भवति । सर्वं भवति । स गणेशोऽव्यक्तो योऽणुर्यः श्रेष्ठः स वै वेगवत्तरः । अह्रस्वाह्रस्वाह्रस्वश्च । अतिह्रस्वातिह्रस्वातिह्रस्वश्च । अस्थूलास्थूलास्थूलश्च । ओं न वायुर्नाग्निर्नाकाशो नापः पृथिवी न च । न दृश्यं न दृश्यं न दृश्यम् । न शीतं नोष्णं न वर्षं च । न पीतं न पीतं न पीतम् । न श्वेतं न श्वेतं न श्वेतम् । न रक्तं न रक्तं न

रक्तम् । न कृष्णं न कृष्णं न कृष्णम् । न रूपं न नाम न गुणम् । न प्राप्यं गणेशं मन्यन्ते । स शुद्धः स शुद्धः स शुद्धो गणेशः । स ब्रह्म स ब्रह्म स ब्रह्म गणेशः । स शिवः स शिवः स शिवो गणेशः । इन्द्रो गणेशो विष्णुर्गणेशः सूर्यो गणेश एतत्सर्वं गणेशः । स निर्गुणः स निरहङ्कारः स निर्विकल्पः स निरीहः स निराकार आनन्दरूपस्तेजोरूपमनिर्वाच्यमप्रमेयः पुरातनो गणेशो निगद्यते । स आद्यः सोऽक्षरः सोऽनन्तः सोऽव्ययो महान्पुरुषः । तच्छुद्धं तच्छबलं ततः प्रकृतिमहत्तत्त्वानि जायन्ते । ततश्चाहङ्कारादिपञ्चतन्मात्राणि जायन्ते । ततः पृथ्व्यप्तेजोवाय्वाकाशपञ्चमहद्भूतानि जायन्ते । पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नाद्रेतस्ततः पुरुषस्ततः सर्वं ततः सर्वं ततः सर्वं जगत् । सर्वाणि भूतानि जायन्ते । देवा नु जायन्ते । ततश्च जीवन्ति । देवा नु जीवन्ति । यज्ञा नु जीवन्ति । सर्वं जीवति । स गणेश आत्मा विज्ञेयः । इत्युपनिषत् । य एवं वेद स मुख्यो भवतीति याज्ञवल्क्य इति याज्ञवल्क्य इति ।

इति गणेशोत्तरतापन्यां द्वितीयोपनिषत् ॥

# तृतीयोपनिषत् ।

ॐ । गणेशो वै ब्रह्म तद्विद्यात् । यदिदं किञ्च सर्वं भूतं भव्यं जायमानं च तत्सर्वमित्याचक्षते । अस्मान्नातः परं किञ्चित् । यो वै वेद स वेद ब्रह्म ब्रह्मैवोपाप्नोति । तत्सर्वमित्याचक्षते । ब्रह्मविष्णवादिगणानामीशभूतमित्याह तद्गणेश इति । तत्परमित्याह यमेते नाप्नुवन्ति पृथिवी सुवर्चा युवतिः सजोषाः (?) । यद्वै वाङ् नाक्रामति मनसा सह नाग्निर्न पृथ्वी न तेजो न वायुर्न व्योम न जलमित्याह । नेन्द्रियं न शरीरं न नाम न रूपम् । न शुक्लं न रक्तं न पीतं न कृष्णमिति । न जाग्रन्न स्वप्नो न सुषुप्तिर्न वै तुरीया । तच्छुद्धमप्राप्यमप्राप्यं च । अज्ञेयं चाज्ञेयं च । विकल्पासहिष्णु तत्सशक्तिकं गजवक्त्रं गजाकारं जगदेवावरुन्धे । दिवमनन्तशीर्षैर्दिशमनन्तकरैर्व्योमानन्तजठरैर्महीमनन्तपादैः स्वतेजसा बाह्यान्तरीयान्व्याप्य तिष्ठतीत्याह । तद्वै परं ब्रह्म गणेश इत्यात्मानं मन्यन्ते । तद्वै सर्वतः पश्यति स्म न किञ्चिद्ददर्श । ततो वै सोऽहमभूत् । नैकाकिता युक्तेति गुणान्निर्ममे । नाभे रजः स वै ब्रह्मा । मुखात्सत्त्वं स वै विष्णुः । नयनात्तमः स वै हरः । ब्रह्माणमुपदिशति स्म ब्रह्मन् कुरु सृष्टिम् । ब्रह्मोवाच नाहं वेद्मि । गणेश उवाच मद्देहे ब्रह्माण्डान्तर्गतं विलोकय तथाविधामेव कुरु सृष्टिम् । अथ ब्रह्मा जन्मद्वारेण ब्रह्माण्डान्तर्गतं विलोकयति स्म । समुद्रान् सरितः पर्वतान् वनानि

महीं दिवं पातालं च नरान् पशून्मृगान्नागान् हयान् गोव्रजान् सूर्यांश्चन्द्रमसो नक्षत्राण्यग्नीन् वायून्दिशस्ततो वै सृष्टिमचीकरत् । ततश्चात्मानमिति मन्यते स्म । न वै मत्तः परं किञ्चिदहमेव सर्वस्येश इति यावद्वदति तावत्क्रूरा अजायेरन् । महद्देहा जिह्वया भुवं लिहाना दंष्ट्राव्याप्ताकाशा महच्छब्दा ब्रह्माणं हन्तुमुद्युक्ताः । तान्दृष्ट्वाबिभ्यत्तत्सस्मार । ततश्चाग्रे कोटिसूर्यप्रतीकाशमानन्दरूपं गजवक्त्रं विलोकयति स्म । तुष्टावाथ गणेश्वरम् । त्वं निर्माता क्ष्माभृतां सरितां सागराणां स्थावराणां जङ्गमानां च ।

त्वत्तः परतरं किञ्चिन्नैवास्ति जगतः प्रभो ।
कर्त्ता सर्वस्य विश्वस्य पाता संहारकारकः ।
भवानिदं जगत्सर्वं व्याप्यैव परितिष्ठति ॥

इति स्तुत्वा ब्रह्माणं तदुवाच ब्रह्मंस्तपस्व तपस्वेत्युक्त्वान्तर्हिते तस्मिन् ब्रह्मा तपश्चचार । कियत्स्वतीतेष्वनेहःसु तपसि स्थिते ब्रह्मणि पुरो भूत्वोवाच । प्रसन्नोऽहं प्रसन्नोऽहं वरान् वरय । श्रुत्वैवं वचोन्मील्य[1] नयने यावत्पुरः पश्यति तावद्गणेशं ददर्श । स्तौति स्म । त्वं ब्रह्मा त्वं विष्णुस्त्वं हरस्त्वं प्रजापतिस्त्वमिन्द्रस्त्वं सूर्यस्त्वं सोमस्त्वं गणेशः ।

त्वया व्याप्तं चराचरं त्वदृते न हि किञ्चन ।
ततश्च गणेश उवाच ।

---

1. So MS.

त्वं चाहं च न वै भिन्नौ कुरु सृष्टिं प्रजापते ।
शक्तिं गृहाण मद्दत्तां जगत्सर्जनकर्मणि ॥

ततो वै गृहीतायां शक्त्वा[1] ब्रह्मणः सृष्टिरजायत । ब्राह्मणो वै मुखाज्जज्ञे बाह्वोः क्षत्रमूर्वोर्वैश्यः पद्भ्यां शूद्रश्चक्षुषो वै सूर्यो मनसश्चन्द्रमा अग्निर्वै मुखात्प्राणाद्वायुर्नाभेर्व्योम शीर्ष्णो द्यौः पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकानकल्पयन्निति । ततो वै सत्त्वमुवाच त्वं वै विष्णुः पाहि पाहि जगत्सर्वम् । विष्णुरुवाच न मे शक्तिः । सोवाच[1] गृहाणेमां विद्याम् । ततो वै सत्त्वं तामादाय जगत्पाति स्म । हरमुवाच कुरु हर संहारम् । जगद्धरणाद्धरो भव । हरश्चात्मानमित्यवैति स्म न वै मत्परं किञ्चिद्विश्वस्यादिरहं हर इति गर्वं दधौ यावत्तावद्व्याप्तं व्योम गजवक्त्रैर्महच्छब्दैर्हरं हर्तुमुद्युक्तैः । हरो वै विलोक्य रुदति स्म । रोदनाद्रुद्रसंज्ञः । ततस्तं पुरुषं स्मृत्वा तुष्टाव त्वं ब्रह्मा त्वं कर्त्ता त्वं प्रधानं त्वं लोकान् सृजसि रक्षसि हरसि । विश्वाधारस्त्वमनाधारोऽनाधेयोऽनिर्देश्योऽप्रतर्क्यो व्याप्येदं सर्वं तिष्ठसीति स्तवनाद्विनायकं ददर्श । ततश्च तं ननाम । गणेश उवाच कुरु हर हरणम् । तद्वै संहर्त्ताभूद्रुद्रः । य एवं वेद स गणेशो भवति । इत्युपनिषत् ।

इति गणेशोत्तरतापन्यां तृतीयोपनिषत् ॥

---

1. So MS.

# चतुर्थोपनिषत् ।



ॐ। गणेशो वै सदजायत तद्वै परं ब्रह्म। तद्विदाप्नोति परम्। तदेषाभ्युक्ता यदनादिभूतं यदनन्तरूपं यद्विज्ञानरूपं यद्देवाः सर्वे ब्रह्म ज्येष्ठमुपासते न वै कार्यं करणं न तत्समश्चाधिकश्च दृश्यः। सूर्योऽस्माद्भीत उदेति। वातोऽस्माद्भीतः पवते। अग्निर्वै भीतस्तिष्ठति। तच्चित्स्वरूपं निर्विकारमद्वैतं च। तन्मायाशबलमजनीत्याह। इनेन यथा तमः। ततश्चोमिति ध्वनिरभूत्। स वै गजाकारः। अनिर्वचनीया सैव माया जगद्बीजमित्याह। सैव प्रकृतिरिति गणेश इति प्रधानमिति च मायाशबलमिति च। एतस्माद्वै महत्तत्त्वमजायत। ततः कराग्रेणाहङ्कारं सृष्टवान्। स वै त्रिविधः सात्त्विको राजसस्तामसश्चेति। सात्त्विकी ज्ञानशक्तिः। राजसी क्रियाशक्तिः। तामसी द्रव्यशक्तिः। तामस्याः पञ्चतन्मात्रा अजायन्त पञ्चभूतान्यजायन्त। राजस्याः पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवश्चाजायन्त। सात्त्विक्या दिशो वायुः सूर्यो वरुणोऽश्विनाविति ज्ञानेन्द्रियदेवता अग्निरिन्द्रो विष्णुः प्रजापतिर्मित्र इति कर्मेन्द्रियदेवताः। इदमादिपुरुषरूपम्। परमात्मनः सूक्ष्मशरीरमिदमेवोच्यते। अथ द्वितीयम्। पञ्चतन्मात्राः पञ्चसूक्ष्मभूतान्युपादाय पञ्चीकरणे कृते पञ्चमहाभूतान्यजायन्त। अवशिष्टानां पञ्चपञ्चाशानां कल्पारम्भसमये भूतविभागे चैतन्यप्रवेशादहमित्यभिमानः। तस्मादा-

दिगणेशो भवानुच्यते । ततो वै भूतेभ्यश्चतुर्दश लोका अजायेरन् । तदन्तर्गतजीवराशयः स्थूलशरीरैः सह विराडित्युच्यते । इति द्वितीयम् । राजसो ब्रह्मा सात्त्विको विष्णुस्तामसो वै हरः । त्रयं मिलित्वा परस्परमुवाच अहमेव सर्वस्येश इति । ततो वै परस्परमसहमानाश्चोर्ध्वं जग्मुः । तत्र न किञ्चिद्ददृशुः । ततश्चाधःप्रदेशे दशदिक्षु भ्रमन्तो न किञ्चित्पश्यन्ति स्म । ततो वै ध्यानस्थिता अभूवन् । ततश्च हृद्देशे महान्तं पुरुषं गजवक्त्रमसंख्यशीर्षमसंख्यपादमनन्तकरं तेजसा व्याप्ताखिललोकं ब्रह्ममूर्धानं दिक्श्रवणं ब्रह्माण्डगण्डं चिद्व्योमतालुकं सत्यजननं च जगदुत्पत्त्यपायोन्मेषनिमेषं सोमार्काग्निनेत्रं पर्वतेशरदं पुण्यापुण्योष्ठं[1] ग्रहोडुदशनं भारतीजिह्वं शक्रघ्राणं कुलगोत्रांसं सोमेनकण्ठं[2] हरशिरोरुहं सरिन्नदभुजमुरगाङ्गुलिकमृक्षनखं श्रीहृत्कमाकाशनाभिकं सागरोदरं महीकटिदेशं सृष्टिलिङ्गकं पर्वतेशोरुं दस्रजानुकं जठरान्तःस्थितयक्षगन्धर्वरक्षःकिन्नरमानुषं पातालजंघकं मुनिचरणं कालाङ्गुष्ठकं तारकाजाललाङ्गुलं दृष्ट्वा स्तुवन्ति स्म । यतो वा इमानि भूतानि जायन्ते यतोऽग्निः पृथिव्यप्तेजो वायुर्यत्कराग्राद्ब्रह्मविष्णुरुद्रा अजायन्त यतो वै समुद्राः सरितः पर्वताश्च यतो वै चराचरमिति स्तवनात्प्रसन्नो भूत्वोवाचाहं सर्वस्येशो मत्तः सर्वाणि भूतानि मत्तः सर्वं चराचरं भवन्तो वै न म-

1. The MS. has पुण्यापुण्योष्ठमित्याह । 2. The reading of the MS. is °घण्टं. I suggest the above.

ज्झिन्ना गुणा मे वै न संशयः। गुणेशं मां हृदि सञ्चिन्त्य राजस त्वं जगत्कुरु सात्त्विक त्वं पालय तामस त्वं हरे-त्युक्त्वान्तर्हितः। स वै गणेशः सर्वात्मा विज्ञेयः सर्व-देवात्मा वै स एकः। य एवं वेद स गणेशो भवति। इत्युपनिषत्। सह नाववतु॥

इति गणेशोत्तरतापन्यां चतुर्थोपनिषत्॥

---

# पञ्चमोपनिषत् ।



ॐ । देवा ह वै रुद्रमब्रुवन् कथमेतस्योपासनम् । स होवाच रुद्रो गणको निचृद्गायत्री श्रीगणपतेरेनं मन्त्रराजमन्योन्याभावात्प्रणवस्वरूपस्यास्य परमात्मनोऽङ्गानि जानीते स जानाति सोऽमृतत्वं च गच्छति । योऽधीते स सर्वं तरति । य एनं मन्त्रराजं गणपतेः सवेदं नित्यं जपति सोऽग्निं स्तम्भयति स उदकं स्तम्भयति स वायुं स्तम्भयति स सूर्यं स्तम्भयति स सर्वान्देवान्स्तम्भयति स विषं स्तम्भयति स सर्वोपद्रवान्स्तम्भयति । इत्युपनिषत् । य एनं मन्त्रराजं नित्यमधीते स विघ्नानाकर्षयति देवान्यक्षान् रोगान् ग्रहान्मनुष्यान् सर्वानाकर्षयति । स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं स महर्लोकं स जनोलोकं स तपोलोकं स सत्यलोकं स सप्तलोकं स सर्वलोकं जयति । सोऽग्निष्टोमेन यजते सोऽत्यग्निष्टोमेन स उक्थ्येन स षोडशीयेन स वाजपेयेन सोऽतिरात्रेण सोऽप्तोर्यामेण स सर्वैः क्रतुभिर्यजते । य एनं मन्त्रराजं वैघ्नराजं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते । य एनं मन्त्रराजं गाणेशं वेद स सर्वं वेद स सर्वं वेद । स वेदसमः स मुनिसमः स नागसमः स सूर्यसमः सोऽग्निसम इति । उपनीतैकाधिक-

